A
OLLECTION OF SANSKRIT WORKS
EDITED BY THE
PANDITS OF THE BENARES SANSKRIT COLLEGE
UNDER THE SUPERINTENDENCE OF
G THIBAUT, Ph D
*Nos 131, 142 & 146*

---

गवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्

# गूढार्थदीपिका ।

पण्डितवर—श्रीधनपतिसूरिकृता ।
रसव्याख्या च ।

चार्यश्रीवल्लभाधीश्वर–श्रीविट्ठलनाथदीक्षितशुद्धाद्वैत
सम्प्रदायविदुषा रत्नगोपालभट्टेन परिशोधिते ।

## GÛDHARTHADÎPIKA,

A Commentary on Râsa Panchâdhyâyî
the Tenth Chapter of Śrîmad Bhâgawata,
BY PANDIT DHANAPATI SÛRI,

*And RASAVYÂKHYÂ*

*Edited By Ratna Gopâl Bhatta*

BENARES
*ed by the Proprietors Messrs Braj B Das &*
AND SOLD BY H D GUPTA
*etary, Chowkhamba Sanskrit Book Depot*

Printed at the Vidyâ Vilâs Press
By Harikrishna Dasa
BENARES
1908

श्रीकृष्णाय नमः ।

भागवतदशमस्कन्धस्थरासपञ्चाध्यायीव्याख्या

# गूढार्थदीपिका ।

श्रीधनपतिसूरिकृता ।

---

पाङ्गनागुणाऽऽकृष्टचेता वेत्ताऽखिलस्य यः ॥
स्य कृष्णस्य पादाब्जमाश्रयेऽभीष्टसिद्धये ॥ १ ॥
मः श्रीबालगोपालतीर्थान् व्यासमुखान् मुनीन्
न्नहर्तॄन् गणेशादीन् पण्डितांश्च विमत्सरान् ॥ २
थ पञ्चभिरध्यायै रासक्रीडामहोत्सवः ॥
र्ण्यते मुनिना सम्यक् सद्गुणाकृष्टचेतसा ॥ ३ ॥
न्निशो कल वेणोः श्रुत्वा गत्वा व्रजस्त्रियः ॥
न वादादिक मापुः कान्तेनेति निगद्यते ॥ ४ ॥

द्रवरुणादिविजये किं चित्र, ब्रह्मादिजयसरूढदर्पः
गवता पराजित इति ख्यापनाय क्रमप्राप्तां भग
डा वर्णयितुमुपक्रमते ।

श्रीशुक उवाच ।

वानपि ता रात्रीः शरदोत्फुल्लमल्लिकाः ॥
य रन्तु मनश्चक्रे योगमायामुपाश्रितः ॥ १

भगवानपीति ॥ कामकृतो हि ब्रह्मादिपराजय प्रसि
तदुक्तम्–अहल्यायां जारः सुरपतिरभूदात्मतनया प्रजानाथोऽ
दभजत गुरोरि दुरवन्नाम् ॥ इति प्रायः को वा न पदमपथेऽ
मया श्रमो मद्बाणानां क इव भुवने माथविधिष्यति ।
रूपादिकं विहाय तपश्चर्यायां रता, न ते कामं पराजित
तु तस्मात् पलाय्य ते गता । श्रीकृष्णस्तु शतकोटियूथगोप
रूपैर्यरता कामेन युद्ध्यमानोऽपि आत्मन्यवरुद्धसौर
विजितवानित्यनेन ग्रन्थेन ख्याप्यते । योगमायामुपाश्रित
आरामोऽप्यरीरमत्, साक्षान्मन्मथमन्मथः, आत्मन्यवरुद्धसौरत
दिषु स्थाने ध्याभिधानात् । रासलीलोत्सवश्च नववर्षवयस्त्वे
ऽऽश्विनपूर्णिमायाम् । यत्र सप्तवर्षे वयसि वर्तमाने भगवति
रिकाणां व्रतचर्या । ततः सप्तमवर्षान्तरकार्तिकस्यामावास्य
इन्द्रमखभङ्गः । तच्छुक्लप्रतिपदि गोवर्द्धनमखोत्सवः । द्वि
या भ्रातृभोजनोत्सवः । तृतीयाप्रभृति इन्द्रकृतोपद्रवमवलोक्य
पर्यन्तं गोवर्द्धनधारणम् । दशम्यां गोपानां विस्मयकथाबाहु
एकादश्यां गोविन्दाभिषेकः । द्वादश्यां वरुणलोकगमन
पौर्णमास्यां नन्दादीनां ब्रह्महृदनयनादि । ततश्च शरदः स
रिति । शुक उवाचेत्यनेन कोमलालापवच्छुकोक्तिरूपमिदं
त कामलचित्ततयेव श्रोतव्यं चित्ताकर्षकं च । तत्रापि रास
त्सववर्णनं सर्वस्यापि श्रीमद्भागवतस्य सारभूतमिति ध्वनि
परमहंसशिरोमणिना श्रीशुकेन परमप्रेम्णा वर्णितोऽय
क्रीडोत्सवोऽत परमहंसैरप्यादरेण श्रोतव्य इत्यपि सूचि
भगवानपि, ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ॥ ज्ञान
ग्ययोश्चैव षण्णां भग इतीङ्गना ॥ इत्युक्तषड्विधैश्वर्यवानपि र तु म
शृङ्गाररसालम्बनाशिरोमणिभूतानां शतकोटियूथविलासिनीन

सौकुमार्यसौन्दर्याऽधराऽमृतसौरभ्याणि परमशोभनानि र
त्रादीन्द्रियैरनुभवितु स्वायानि तानि तदीयश्रोत्रादिभि
भावयितुमिच्छितवान् । एतात त काल गोप्य एव वर्द्धमान
चलचित्ततया र तु मनश्चक्रिरे । भगवाँस्तु वयोविशेष
माणो न चक्रे, सम्प्रति प्राप्तवयास्ता', मयेमा रस्यथ र
पूर्वप्रतिज्ञाता रात्रीश्च वीक्ष्य भगवानपि र तु मनश्चक
र्थः । पूर्णाऽपि ता रात्रीरुद्दीपनत्वेनानुभूय किमुत गो
येति तासा सौ दर्य्यप्रेमाद्यतिशयो व्यज्यते । यद्वा ता
द्धार्थकतत्पदप्रयोगान्नानागुणवतीरिति तासामुत्कर्षो बो
। ता इति बहुवचननिर्देशाद्, ब्रह्मरात्र उपावृत्त
माणत्वाच्चैकस्यामपि रात्र्या तादृशविलासानुकूलासङ्ख्य
ः स्वसङ्कल्पिता वीक्ष्येति बोधितम् । तथाच तादृशरम
कुलाः कोटिकोटिरात्री स्वसङ्कल्पिता वीक्ष्येसेव तत्त्व
था (पूर्णाया) राकारात्रेश्च द्रात् पूर्वममेवशाच्चन्द्रोदयस्य
णान तर वर्ण्यमानत्वाद् वीक्ष्येत्युक्तिरसगता स्यात् ।
वनशोभामप्युद्दीपिकामाह ॥ शरदिति ॥ शरदा
पा । यद्वा शरदेति टाबन्तत्वात् । शरदायामपि उत्फु
लका यासु । उ फुल्लाश्च ता मल्लिकाश्चेति वा । एतद्वाक
कुन्दस्रज कुलपतेरिह वाति ग धः, रेमे तत्तरलानन्दिकम
वायुनेति वक्ष्यमाणत्वाच्च वृन्दावनमाहात्म्यात् सर्वत्र
पुष्पविकासो बोधित' । र तु मनश्चक्रे इत्युक्त्या
मिद् रमण, न तु बाह्य नरविडम्बनमात्रमिति सूचितम् ।
ा, रेमे, र तुमारेभे इति वा ब्रूयात् । तत्रापि, चक्र इत्यात्मनेप
ात् तदपि न गोपिकानुराधेन तदर्थमेवापि तु स्वस्य सुखाथम
[चयतियथा, आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे॥

हैतुकीं भक्तिमित्थभुतगुणो हरिरित्यत्रात्मारामाणामपि मुर्न
ताकर्षणसामर्थ्यवद् गुणाकृष्टचेतसा भगवद्गुणेषु रमणमुक्त
ङ्गोपाङ्गनाना तादृशगुणाकृष्टचेतसो भगवतोऽपि तासु रमणमु
नन्नु स्वल्पकाले कथमनल्पकालसमावेश., कथञ्च स्वल्प
यूथगोपाङ्गनाक्रीडनसभव., कथञ्चैकस्याऽसख्यातगोपिका
रमणसम्भवः, कथञ्च अमनस्कभगवतस्तद्रमणासक्तमनस्त्व
दिशङ्काजाल, तन्निरासायाह ॥योगमायामुपाश्रित इति॥अघ
टनापटीयसीं, माया तु प्रकृतिं विद्यात्. मम मायादुरत्ययेः
ोक्ता योगमायाम् उपाश्रितः । स्वाश्रिता तां कर्तव्यलीले
णसाधनत्वेनाश्रितवान् । यद्वा योगः स्वेन गोपीनां सयो
र्थं माया कृपाम् उप आधिक्येनाश्रितः।यद्वा स्वस्मिन् वात्सल
क्रान्तचेतसा नन्दादीना तया तया लीलया आनन्दसा
जितवान् । पुनश्च ब्रह्महृदप्रवेशादिना स्वस्वरूपानन्दमाि
ामप्यवस्था दर्शितवान् । यास्तु सखीभावमाश्रित्य चिर
रभ्य स्वेन रमणोत्कटोत्कण्ठावत्यस्तासा गोपङ्गनानां मनो
 कथ कृतवानित्यपेक्षायामाह॥भवानपीति ॥ यद्यप्यासौ पू
मस्तथापि पूर्वकोटिज मस्वऽस्मिँश्चजन्मनि उपाश्रितो रमणार्थ
यगाराधितो यस्ताभिः स, तास्तासामभिलषितवितरणानु
तिश्चक्रे, एकस्या रजन्यामसख्यातरजनीप्रदर्शनसङ्कल्प कृतवा
भूता. ? शरदोत्फुल्लमल्लिका. । यासु शरदोत्फुल्लमल्लिक
ः इति वा । मल्लिकेति पुष्पान्तराणामप्युपलक्षणम् । त
ना अपि भगवान् रमणानुरूप मनोऽपि चक्रे । इदञ्च स
टितघटनापटीयस्या स्वयोगमायाशक्त्या सम्पादितवानि
नाह । योगमाया वीक्ष्य सर्वसम्पादनाय कटाक्षेणोद्बोध्य
योगमायाशक्त्या एतासां मनोरथपूर्तिर्भविष्यति, तत्र

हानिरित्याशयेन ता वीक्ष्येति वा । यद्वा तासां योगार्थं म
य । तथाच मायिकेन संयोगेन नास्ति मम पूर्णकामत्वादि
हानिरिति भावः । यद्वा भगवानपि योगमायामुपाश्रितो यं
ाम् अधिष्ठाय प्रकटीकृतनन्दनविग्रहस्ता· स्वस्मिन्नासक्त
गोपीर्वीक्ष्यालोच्य तन्मनोरथपूर्त्यर्थं रास्यादिकं चक्र इत्य
यद्वा ता रात्रीर्वीक्ष्य तासां मनश्चक्रे रन्तुं योगमायामधि
स्थितः । योगमायया कृष्णेन सार्द्धं सम्यग्रमणं कृतव
मेति तासां मनस्सु दृढतरां प्रतीतिमुत्पादयितुं प्रवृत्त इत्य
ध्यायात्मकोऽयं सर्वशास्त्रसारसर्वस्वभूतो ग्रन्थ इति सूचा
ञाचरणार्थमादौ भगवानिति पदं प्रयुक्तम् । अत्र भक्तिशा
धाने श्रीमद्भागवते पारमहंस्यां संहितायां प्रसङ्गात् पर
शृङ्गाररसमनुवदता मुनीन्द्रेण स्वासिद्धान्तोऽपि गूढतया
। अत एव शृङ्गारकथापदेशेन विशेषतो निवृत्तिपरेयं पः
यीति श्रीधरस्वामिभिरप्युक्तम् ।

निवृत्तिमार्गसंभक्तचेतसां विदुषां मुदे ।
व्यक्तीकरोम्यहं पक्षमिमं कृष्णप्रसादतः ॥

शेषसुखं निखिलमपि दुःखसंभिन्नमेव । ये हि संस्पर्शजा भं
योनय एव ते * आद्यन्तवन्तः कौन्तेय न तेषु रमते बुध
दद्वास्यादतो विवेकवतां निर्विशेषब्रह्मानन्दाविर्भावाभिलाषुः
तिपित्सानिवृत्तिरेव सर्वोपायैः संपाद्येति ब्रह्मराज्यवच्छि
रूपर्यन्तं तुच्छीकृतकोटिकन्दर्पविग्रहेण भगवताऽपि रममाण
ाङ्गनानां दुःखनिवृत्तिस्तृप्तिश्च न संपन्नेति वर्णयता भग
ना सूचितम् । तदुक्तं—न जातु कामः कामानामुपभोगेन
ति * हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धत इति । एवा
कोत्पत्तियोग्ये इह जन्मनि जन्मान्तरे वा काम्यनिषिद्धवर्तनः

रनित्यनैमित्तिकप्रायश्चित्तोपासनानुष्ठानेन निता तन्निर्मले र
नुग्रहपात्रऽ त'करणे श्रुतिरूपस्वका ताभिरभिर तु भगवा
ाश्चक्रे । यमेवैष वृणुते तेन लभ्य इत्यादिश्रुत्या भगवदनुग्रह
प्रर्थविचारे प्रवृत्तिर्भवति, ना यथेति भाव' । भगवदनुग्रहप
बोधनायाह । ता रात्रीरसख्यातजीवत्र मसु अनुभूता अहङ्क
त्तमनोबुद्धिरूपा अ तःकरणवृत्ती रा त्रिज्ञानरूपतमोव्याप्त
त्मतत्त्वाऽऽवरणरूपत्वाद् रात्रिसदृशा सम्प्रति शारदोत्फु
ल्लका' शरत्स्थानापन्नेन भगवदाराधनलक्षणेन निष्कामत्
अ त'करणशुद्धिसाधनेन फुल्ला विकसिता मालत्यादिपु
नापन्ना शा सादयो यासु ता वीक्ष्य । शा तो दा त उप
तिक्षु समाहित, श्रद्धावित्तो भूत्वा आत्म येवात्मान पश्येदि
। । ननु निर्गुणस्य जातिगुणादिशब्दप्रवृत्तिनिमित्तरहित
तेमतिपाद्यत्वासम्भवात् कथ ब्रह्मणि तासा रमणमित्याशङ्क्य
मायामुपाश्रित इति ॥ तथाचात निरसनेन निर्विशेषब्रह्मो
धलक्षणमेव तासा रमणमिति भाव' ॥ १ ॥

तदैव चन्द्रमा अपि भगवद्भावमुद्दीपयन्नुदगादित्याह ।

तदोडुराजः ककुभ करैर्मुख
प्राच्या विलिम्पन्नरुणेन शन्तमै ॥
स चर्षणीनामुदगाच्छुचा मृजन्
प्रिय प्रियाया इव दीर्घदर्शन ॥ २ ॥

तदेति ॥ तस्मिन्नेव क्षणे स प्रसिद्ध उडूना नक्षत्राणा राज
उदगादुदय प्राप्त । उडुपदेन नक्षत्राणामपि तत्परिवारत्वे
' सूचित । किञ्च, मनसापि न ग तव्या, परदारा कद

ति निषेधमनुसधाय महत्समक्ष लज्जया वा रमणाच्चेतस'
न्निमपि ानराकरोदित्याशयेनाह ॥ ककुभ इात ॥ प्राच्या इ
ष्ठिताया दिशो मुख शतमै परमसुखकरैः करै किरणलक्ष'
नेनारुणेनोदयरागेण विलिम्पन्नरुणीकुर्वन्।तथाचानया प्रह
गमेवमुपदिशति स्म भगवॉश्चन्द्र भो यदुकुलावतस, अपेतद
आरमणाच्चित्त मा निवर्त्तय, मद्वश्यत्वात् । यथाऽह तवकु
रूपो द्विजराजस्तत्रापि पुरातनस्तत्रापि राजयक्ष्माऽऽक्रान्त
न परमसु दरानेकस्त्रीपति प्राच्या दिश' परास्त्रिया मुख
व स्वय तस्यामनुरक्तस्तामप्यनुरागवती करोमि तद्वत् त्व
यस्तत्रापि नवनयास्तत्राप्यविवाहितत्वात् स्वभार्यारहितस्त
सर्वदोषविनिर्मुक्तपरमसु दरविग्रहस्तत्रापि सम्प्रति गोपज।
श्रेष्ठो यथेष्ट गोपाङ्गनाभिरभिरमग कुरु, नास्ति तव द
ोऽपि । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन. * स यत् प्रम
ते लोकस्तदनुवर्तत इति न्यायात्तु, तेजीयसो न दोषायेत्युक्त
चता नास्ति मम दोषसपर्कस्तव त्वतितेजस्वित्वात् सुतरामिर
इव बोधितवानित्याशयेनाह ॥ चर्षणीनामिति ॥ अर्यम्णा
पत्नी तयोश्चर्षणयः सुता * यत्र वै मानुषी जातिर्ब्रह
कल्पितेति पष्ठस्क धोक्तमानुषजातीना शुच शरदर्क्कज
दु खानि मृजन् अपनयन् । तथाच समस्तजनतापनिवर्तव
क्ते तादृशदोषजनिततापावाप्तिसम्भावनेति भावः । तत्रानु
न्तमाह ॥ प्रिय इति ॥ दीर्घकालेन दर्शन यस्य स प्रिय'
ा प्रियाया' स्वरमण्या मुखम् अरुणेनानुरागेण स्वकरध
कुमेन च यथा लिम्पति तद्वत् । यद्वा मन करणसमकाल
ोऽपि तादृशाऽसख्यातराग्यनुकूल एवोत्पादित इत्या
ति ॥ तदा तस्मिन्नेव क्षणे स्वमकल्पितश्चन्द्र उदगात् । स

किञ्चिद्विज्ञापयन्निवोदगादित्याशयेनाह ॥ ककुभ इति ॥
चन्द्रमा मनसो जात इति श्रुतेस्त्वत्त उत्पन्नस्य त्वत्प्रसा
प्रतापस्य ममापि नास्त्येवंविधकर्मलेप' । तव तु सर्वेश्वरस्
स्त्योऽत' स्वभक्तानामासां मनोरथ पूरयेति बोधयन्निवेति
किञ्च, सर्वसन्तापनिवृत्त्यर्थं प्रवृत्तौ लोकदृष्ट्या प्रतीयमा
दोषो न संस्पृश्यत इत्यपि विज्ञापयन्नित्याशयेनाह॥ चर्षण
ति ॥ यद्वा यथा मम प्राच्याः ककुभः सम्बन्धः परदारसप
प्रतिभाति, न तु वस्तुतस्तत्सम्पर्कः, किं तु सर्वजनतापनि
प्राच्यां दिशि समुदयमात्र, तथा भगवतोऽपि स्वजनसन्तापा
ऽर्थं कृतावतारस्य तत्तल्लीलया भक्तसुखसंपादकप्रवृत्तौ मूढ
लौकिकरमणादिप्रतीतावपि नास्ति किञ्चिद् बाधकमिति
यन्निवोदगादित्याशयेनाह ॥ ककुभ इति ॥

निवृत्तिपक्षे—तदा भगवत्प्रसादोदयक्षण एवोडूनां त
पत्नाना शुभवृत्तीना राजा विवेकाख्यश्चन्द्र उदगात् । किं
मित्यपेक्षायामाह ॥ ककुभ इति ॥ प्राच्या अनेकजन्मप्र
अविवेकदशाया मुख जाड्यलक्षण करस्थानापन्नैस्तत्तद्
संपादितेनारुणेन तत्त्वपदार्थावबोधलक्षणेन रागेणलिम्पन् 
कुर्वन् । अत एव चर्षणीनामधिकारिजनाना तत्तद्वस्तुवि
मृजन् अपनयन् । तत्र दृष्ट्वा तमाह ॥ प्रिय इति ॥ २ ॥

तथा विज्ञापयन्त चन्द्रमवलोक्य यत् कृतवाँस्तदाह

दृष्ट्वा कुमुद्वन्तमखण्डमण्डल
रमाननाभ नवकुङ्कुमारुणम् ॥
वन च तत्कोमलगोभिरञ्जित
जगौ कल वामदृशा मनोहरम् ॥ ३ ॥

द्वेति ॥ कुमुदेऽपि कुमुत प्रोक्तमिति विश्वात् कुमुत कुमुद
ानीयत्वेन विद्यतेऽस्येति । यथा स्वभक्ताः कुमुदिन्यः सम्
न मया विकास मापितास्तथा स्वभक्ता गोप्यस्त्वयाऽपि
ानीया' । उदयन्नेव सविता पद्मेष्वर्पयति श्रियम् * विभाव
द्धीना फल सुहृदनुग्रहामित्युक्तेरिति विज्ञापय तमिव । पुनः
ण्ड मण्डल बिम्ब यस्य तम् । परोकारशीलस्य काऽपि हा
ीति सूचयन्तामिव । अनेन राकेति ध्वनितम् । पुनश्च रम
म्या आननाऽऽभावद् आभा कान्तिर्यस्य । तद्भ्रातृत्वात् ।
। लक्ष्म्याः स्मारकत्वेन रमणेच्छामुद्दीपयन्तामिव । स्वभार्याः
ाच्छयालकस्य मम सन्निधौ सकोचो न विधेय इति वा ह
ामिव । यद्वा, सर्वलक्ष्मीः सर्वकान्ति. सर्वसमोहिनी परा *
स्मृतेः, रमा श्रीराधा । रमन्ते रमयन्तीति वा रमा गोप
ामाननस्याभेवाभा यस्य तम् । स्वदर्शनेन ता. स्मृतिपथ
यन्तामिव । तथा उदयरागव्याप्तत्वान्नवकुङ्कुमापिण्डवद
ाहसमये यल्लक्ष्म्यादिमुख तत्तुल्यत्वान्नूतनकाममुद्दीपय त
वन च तस्य तथाभूतस्य चन्द्रस्य कोमलैर्गोभिः किरणैर
ात, गोभिः अञ्जित व्याप्तमिति वा । यद्वा भावेक्त. । तत्कोः
भरश्मिञ्जन यत्र । किरणानां सुधादोग्धृत्व, वन एव पाल्य
च ज्ञापयितु गोपदम् । तत्रापि शीतबाधाकरत्वनिराः
मलपदम् । तथाच यथोक्तविशेषणविशिष्ट च द्र रमणयोग्य
दृष्ट्वा, कल जगौ ॥ अत्र विशेष्यस्याऽनुक्त्या आत्मा मुख ः
ाष्य ज्ञातव्यम् । अस्मिन् पक्षे, कोः पृथिव्या अपि मुत
ात्वेन विद्यते यस्य तमात्मानम् । मुखपक्षे कुमुद्वदिति ि
ारिणामः । अनेन भूचरसुखार्थ कृतावतारेण मया मदास
ासा गोप्याऽपि मयाऽपि रमणेन सुखि यो विधेया इति ः

। पुनश्चाखण्डमन्यूनानतिरिक्त मण्डल नासाकर्णाद्यङ्गचक्रं
न् । अनेन गोप्यर्थमेव तुच्छीकृतकोटिकन्दर्पविग्रहस्य माद्दुष
ात् ता अवश्य रमयितव्या इति सूचितम्। पुनश्च रमाणां
ाननानामाभा यस्मिन् । अनेन स्वस्मिस्तासा खचित
नेन तत्फलप्रदानस्यावश्यकत्व सूचितम् । पुनश्च ताभिर्लि
कुङ्कुमेनारुणम् । यद्वा, अत एव तन्मुखलिप्तेन नवकुङ्कु
विम्बितेनारुणम् । अनेन स्वविग्रहस्य तद्विग्रहगतरागरञ्जित
नेन तन्मनोगतरागेण स्वमनसाऽपि रञ्जितत्वमावश्यकमि
नेतम्।तद्विकसितकुसुमाद्यलङ्कृतम् । पुनश्च स्वस्य स्वमुख
कोमलगोभिरभिरञ्जितम् । एवमुद्दीपनालम्बनविभावौ
म, अव्यक्तमधुराक्षर यथा स्यात् तथा, जगौ गान कृतवान
पि वेणुनेति ज्ञातव्यम्।कलपदाऽमृतवेणुगीतेति वक्ष्यमाणात
मधुरमिति मनोहरणशक्तिमत् । अव्यक्तमिति सर्वासा
ह्लानज्ञानोत्पादकमन्येषा तदाह्लानानिश्चायक चेति बोधित
रत्वात् सर्वाकर्षण वारयति ॥ वामेति ॥ वामा मनोहरा
क्षा यासां, वाम सुन्दर दृग् दर्शन यासामिति वा । ता
तीना सौन्दर्य्यादिगुणगणालङ्कृतानामेव मनोहर यथा स्य
। गायन्त स्त्रिय कामय त इति श्रुतेः।वामाः स्वस्मिन् कु
दृशो यासां तासां मनोहरामिति श्लेषेण सर्वदा स्वस्मि
टलमेव पश्य तीना सर्वेन्द्रियप्रवर्तकमनस आकर्षणेन
नाभावाय चेत्यपि द्रष्टव्यम्। कल वामदृशामित्यत्र श्लेषा त
माबिज, क्लीम्— इत्याकारक जगाविसपि ज्ञेयम् । तथाहि ।
कारलकारौ । वामदृशेति टाब तम्। वामदृशा ईकारः । म त्रश
मदागिति चतुर्थस्वरस्य सञ्ज्ञा।इकारश्च म् च वामदृशामिति स
द्वन्द्वे अमो लुकि रूपम्। तथाच ईमिति च तेन क्लीमिति सि

निवृत्तिपक्षे, अथ भगवत्कृतमनुग्रहान्तर दर्शयति ॥ दृष्ट्वेति
सता अनित्याऽशुचिविषयप्राप्तिजन्या मुत् कुमुद्, नकुमुद् अ
= तदभाव कर्तव्यत्वेन विद्यते यस्य विवेकलक्षणचन्द्रस्य त
प्यखण्ड मण्डलवैराग्यशान्त्यादिसाधनसमूहो यस्य त पूर्ण वै
दियुक्तम् । यतो, रमाननाभ रमायाः सपत्नमदादिरूपेण परि
। आनने मुखे अभा अदीप्तिर्यस्मात् तम् । विषयमात्रसौ
द्धिनिवर्तकम् । पुनश्च, नवकुङ्कुमारुणम् । पूर्वं हि अनात्म
वानुरागः स्थितः । सम्प्रति नवीनेन कुङ्कुमस्थानापन्नेनात्
गेणाऽरुण वन कामक्रोधाद्यनेककण्टकद्रुमाद्याक्रान्तत्व
थानापन्नम न्तःकरण, सम्प्रति, तत्कोमलगोऽभिरञ्जित र
कलक्षणचन्द्रस्य कोमलैः सर्वसुखकरैस्तत्तद्विचारभदलक्ष
गैरभिरञ्जितम् यद्वा तदन्तःकरणलक्षण वन कोमलैस्सत्का
शास्त्रश्रवणसत्पादस्पर्शभगवन्मूर्तिसज्जनदर्शनभगवन्नैवे
दनभगवच्चरणारवि दार्पिततुलस्याघ्राणभगवन्नामस्मरणाच्च
रैर्गोभिरिन्द्रियैस्तज्जन्याभिर्वृत्तिभिरभिरञ्जित शोभित च
म् अनेकार्थसूचक मधुराक्षरम्, अथाऽतो ब्रह्मजिज्ञासा, ज
ग्रस्य यतः, शास्त्रयोनित्वात्, तत्तु समन्वयादित्यादिसूत्र
गद्वैपायनात्मनाऽऽविर्भूय जगौ । कथ भूत कल, वामदृशा
परमसुन्दरस्य परमात्मनो दृग् ज्ञान याभ्यस्ता उपनिषद
औपनिषद पुरुष पृच्छामीति श्रुतेस्तासा परब्रह्मणि तात्पर्या
णकारणम् । वामा सुन्दरा दृग् ज्ञान यासा तासामिति व
कुटिला दृशो यासामस्पष्टब्रह्मलिङ्गभेदाद्यनुवादिकाना, म
प्रत्यगभिन्ने ब्रह्मणि तात्पर्यापहरणपरम् । यद्वा कुटिलज्ञा
वादिना मनोहर तदभिप्रेतार्थनिरासकरम् । यद्वा वामदृशा शो
वर्ता विवेकिना वेदा तशास्त्राधिकारिणा सता मनोहर म

अमनोज्ञ तु विषयासक्तचेतसाम् । यद्वा, आत्मा वा अरे
ः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः, सोऽन्वेष्टव्य
जिज्ञासितव्य इत्यादिरूप कल जगौ । कीदृश ? वामदृशामना
दार्थविषयाणा कुटिलवृत्तीना मनोहरम् । तत्कारणभूर
त्मप्रवणमनस उपशामकम् । यद्वा यथोक्तविवेकिना मनो
र्थ. ॥ ३ ॥

अथ तादृशगानानन्तर यद् वृत्त तदाह

निशम्य गीत तदनङ्गवर्धन
व्रजस्त्रिय कृष्णगृहीतमानसा ॥
आजग्मुरन्योन्यमलक्षितोद्यमा
स यत्र कान्तो जवलोलकुण्डला: ॥ ४ ॥

निशम्येति॥तद् गीतमनङ्गस्य कामस्य वर्द्धनम् अङ्कुरित
मस्य सर्वाङ्गसपूर्णतापादकम्।एतेन तस्याऽमृतसेकरूपत्व सूचि
। यद्वा । तद् गीतमनङ्गस्य सर्वाङ्गरहितस्यानङ्कुरितस्य
मस्य वर्द्धन = तत्क्षणमेवोत्पाद्य अभिवृद्धिपर्यन्त नयनसमर्थ
तु व्रजस्त्रियश्चिरकालमारभ्य तद्विषयककामाविष्टस्वान्तास्ता
त निशम्याऽऽकर्ण्य कलगीतलक्षणसूत्रगुम्फिताः पाञ्चालिका
ऽऽजग्मु. । जग्मुरिति वक्तव्ये स्वस्य कृष्णसन्निधानावेशा
जग्मुरित्युक्तम्।ननु किं सर्वा अपि व्रजस्त्रिय आजग्मुस्तत्राप्य
मऽलक्षितगमनविरोधइतिचेत्तत्राह॥कृष्णगृहीतमानसाः॥कृष्णे
मेव गृहीत मानस मनो यासा तास्तत्राप्यन्यो यमलक्षितो भग
तत्वेन स्वीकारलक्षण उद्यमो यासा ताः । प्रत्येकमेव भग
तत्वेनाङ्गीकृतवत्य. । सभ्रम. स्नेहमाख्यातीत्युक्तत्वात् स

ापक तासां सभ्रममाह ॥ जवेन लोले सकम्पे कुण्डले य
। अनेन कर्णव्यथानुसधानाभाव सूचितः । यद्वा, मां
तीमालक्ष्येयमपि यास्यतीति सापत्नभयात् कृष्णगृहीतमा
विचाराऽस्फूर्तेर्वा अ योऽन्यमलक्षितगमनोद्योगाः । अत
न चञ्चलकर्णाभरणाः । कुत्रेसत आह ॥ सः पूर्वमुपा
तो यत्र स्थितस्तत्र । यद्वा चोरचक्रवर्तिना श्रीकृष्णेन गृहीत
ासानि तत्सम्ब धीनि, धृतिस्मृतिविवेकलज्जाभीतिमत्यादीि
ां ता आजग्मुः । अनेन कृष्णो हि महाचोराधिराजो वेणु
ाग्यस्वभूतमहाचोर व्रजे प्रेषितवांस्तेन च व्रजाङ्गनाना विद्द
ारेण अन्त करण कोशागारमाविश्य धैर्यादिमहारत्नपूरितमने
ामपहृत्य झटिसेवानीय स्वस्वामिने दत्ता ता कृष्णात् मार्थि
ति सूचितम् । अत एव महाचोर धतु व्यग्रत्वात् सूचकमन
ाहृतत्वाद्वा अ योऽन्यमलक्षितोद्यमा, । अत एव जवलोलकु
। कुण्डलेति कङ्कणकिङ्किण्यादेरप्युपलक्षणम् । अनेन बाहिर्गृहस्
न्नस्थूलदेहस्थधा यादिस्थानीयभूषणा यत्पत्नबुद्ध्या ।चैं
नापहृतानीति ध्वनितम् ॥

निवृत्तिपक्षे एव भगवदनुगृहीतस्य विवेकवैराग्यादिसा
ास्या त करणे परब्रह्मणा श्रुतिरूपका तानामभिरमण स
ानिरोधन च सपत्नमित्याह॥निशम्येति॥तद्यथोक्त गीत वृजा
ोना गवामवस्थितिस्थान वेदो व्रजशब्देनाभिधीयते।तस्सवां
स्त्रियः श्रुतयः श्रुत्वा स कान्त, कमनीय परमपुरुषार्थ
ात्मा यत्र विविक्त्य न्त करणलक्षण वने वर्तन तत्र आजग्मु
प्रतिपादकत्वेन स्फूर्तिं गता । तेषामेवानुकम्पार्थमहमज्ञा
, * नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति भगव
ात् स्वभक्ता त करणस्थितः श्रुतिभी रममाणस्तदज्ञान न

ीति विज्ञायत इत्यर्थः । आजग्मुरित्युक्त्या स्वान्तःकरणवर्ति
ःम येवाजग्मुरिति सूचयति । गीत विशिनष्टि ॥ अनङ्गवर्द्धन
ात आदेशो नेति नेतीत्युक्तस्य मूर्तामूर्तलक्षणाङ्गविनिर्मुक्त
वैशेषस्य ब्रह्मणो वर्द्धनमज्ञानावृतस्य तस्याज्ञाननिवर्तनेना
ाकर, यद्वा अङ्गाना देहाना वर्द्धनमसङ्ख्यातदेहोत्पत्तिकार
ानमङ्गवर्द्धन तद्विरोध्यनङ्गवर्द्धनम् । कथम्भूता व्रजस्त्रिय
पेन सदानन्दस्वरूपेण परमात्मना गृहीत मानस तात्पर्य य
कृष्णे तात्पर्येण समान्विताः । पुनश्चान्योन्यमलक्षित उद
ात्मप्रतिपादनरूपो यासा ताः । परस्पराकाङ्क्षारहिताः ।
ः स्वत एव प्रमाणभूता इति यावत् । पुनश्च जवेन
ने चलानि झटिति नाशोन्मुखानि कुण्डलानि आशादिरू
ा याभ्यस्ताः।विचारिताःसत्य आशु जीवात्मपाशनिवर्तिका
ात् । कुण्डल कर्णभूषाया पाशेऽपि वलयेऽपि चेति मेदिन
ो हस्तयोऽपि इन्द्रियलक्षणगवा वासस्थानत्वाद्देहो व्रजशब्दे
। । तदन्तरवस्थानाद् व्रजस्त्रियः, कृष्णेन गृहीत कारण
स यासा ताः कृष्णासक्तमन सम्बन्धिन्यः । यद्वा कृष्णेन
स्वीयत्वेनाङ्गीकृत' कृष्णानुगृहीतो विवेकादिसाधनसपन्नस्त
सा मनःसम्बन्धि यो, न त्वनधिकारिणः । परस्पर निरपे
पारवसस्तत्तदिन्द्रियद्वारा निःसृत्य स्वस्वविषयप्रकाशने स्व
, स कान्तो यत्र वर्तते तत्र आजग्मुः । बहिर्मुखता वि
ः तर्मुखता प्राप्तास्तदानीं जवेन झटिति लोलानि कम्पिता
ण्डलानि पाशा याभ्यस्ता । समानमन्यत् ॥ ४ ॥

आजग्मुरित्युक्तावपि प्रतिबन्धकाना तत्तद्व्यापाराणा
त् कथ स्वस्वगृहात् तासां निःसरणमित्यपेक्षाया प्रेष्ठमूच
श्रवणमात्रेण तत्श्रवणमानसाना तत्क्षणमेव त्रैवर्गिककर्मि

ार्जीतेति सूचयँस्तासां निर्गमनप्रकारमाह ॥

ुहन्त्योऽभिययु काश्चिद्दोह हि हित्वा समुत्सुका
ायोऽधिश्रित्य सयावमनुद्वास्यापरा ययु. ॥ ५ ॥
ारिवेषयन्त्यस्तद्धित्वा पाययन्त्यः शिशून् पय ॥
ुश्रूषन्त्यः पतीन् काश्चिदश्नन्त्योऽपास्य भोजनम्॥
लेम्पन्त्य प्रमृजन्त्योऽन्या अञ्जन्त्य काश्च लोच
ायत्यस्तवस्त्राभरणा. काश्चित् कृष्णान्तिक ययु ॥

ृ त्य इति ॥ दुहन्त्यो दोहयन्त्यस्तत्क्रियामध्ये एव दोह दो
ा काश्चिद् अभिययुः वेणुगीतकृतप्रेष्ठाभिमुख ययुः ।
नपात्र गृहीत्वा काश्चित् स्थितास्तत्समये गीते श्रुते तत्
ायाभिययुः । यद्वा दोहनानन्तर दुग्धपात्र गृहीत्वा कार
तास्तत्क्षणे वेणुगीते श्रुते तत् त्यक्त्वाऽभिययु । कार
ल्लीस्थ पयश्चुल्ल्यामधिश्रित्य तत्क्वाथार्थ तदधिसेचननिष्ट
। तत्सन्निधौ स्थितास्तत्समये वेणुगीतमन्तःप्रविष्ट, ततस्तत्क्व
ीक्षमाणास्तद्रक्षण विहायाभिययुः । अपरा. सयाव पक्व
कृणान्नमनुद्वास्य तन्नाशमप्यननुसन्धायाभिययु । यतः समु
उत्कटोत्कण्ठावत्यस्तद्विलम्बसहनासमर्था. । एतेन स्वजा
विहायाभिययुरित्युक्तम् ॥ ॥ अथ स्त्रीमात्रधर्मत्यागमाह
परिवेषय त्यो व धुभृत्याद्यग्रे परिवेषण कुर्वत्यस्तत्परिवे
ाय काश्चिदभिययुः । अतिस्निग्धान् शिशून् पयो
ामितरद् वा पायय त्यस्तत्पायन हित्वा काश्चिदभिययु
ान् सर्वथा सेवनीयान् शुश्रूपन्त्य. पादप्रक्षालनादिसेवा

त्यस्ता सेवां विहायाभिययुः । काश्चिद् भोजनं कुर्व
न्त्यस्त्यक्त्वा अनाचान्ता एवाभिमुखं ययुः । कृष्णान्तिकं
स्युत्तरत्र चान्वयः । एतेन बुभुक्षात्यागः, अतिस्निग्धत्याग
र्मत्यागः, स्वदेहपोषणत्यागश्चोक्तः ॥

काश्चिच्च चन्दनकुङ्कुमादिना भगवदङ्गसङ्गसम्भावनयाङ्गर
ोऽप्युत्कण्ठया तल्लेपनं हित्वा आकर्षकस्य प्रेष्ठस्य सम
: । अन्याः प्रमृजन्त्यः अङ्गोद्वर्तनादिकं कुर्वत्यः । गृह
पन्त्यः प्रमृजन्त्य इति वा पात्रभूषणादि वा प्रमृजन्त्यः । व
लोचने अञ्जनेन शोभिते कुर्वत्यः । अनेनावश्यकदेहवेषा
ग उक्तः । कासाञ्चिद् गमनत्वरावेशवशाद् देहावयवविशे
सन्धानाभावमाह ॥ व्यत्यस्तेति ॥ स्थानतः स्वरूपतश्चोर्ध्वा
पेन विपर्ययं प्राप्तानि वस्त्राभरणानि यासां ताः । वल्लभप्रा
या मदनावेशसम्भ्रमात् * विभ्रमो हारमाल्यादिभूषास्थानवि
र इत्युक्तो विभ्रमाख्योऽनुभावोऽयम् । अनेन भगवत्तुष्ट
तदासक्तचेतसामन्यथाकृतमपि फलत्येवेति ध्वनितम् ॥

निवृत्तिपक्षे आगमनप्रकाराकाङ्क्षायामादौ, तमेतं वेदानुवच
प्रणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकेन, सर्वापेक्षा
दिश्रुतेरिति श्रुतिसूत्राभ्यां सर्वकर्मणामिव संयोगपृथक्त्वन्
तत्प्रतिपादकश्रुतीनामपि परमात्माभिमुख्यमाह । दुहन्त्य इ
याद् यजेद्दध्यादित्यादिश्रुतयस्तत्तत्कर्मफलप्राप्तिं प्रतिपादयन
: तत्फलं हित्वा तत्प्रतिपादने मुख्यं तात्पर्यं विहायाभिययु
णिसमन्वयं गन्तुं प्रवृत्ताः । सर्वे वेदा यत्पदमामनन्तीत्यादि
। काश्चित्तु समुत्सुकाः, यथा पुष्करपलाश आपो न श्लिष्
एवमेवंविदि पापकर्म न श्लिष्यते तद्यथेषीकातूलमग्नौ प्रोत
त एव हास्य सर्वे पाप्मानः प्रदूयन्त इत्याद्याः श्रुतयः । प

ानीय क्रियमाण सञ्चित च कर्माधिश्रित्य तत्परिपाक तद्
ये तत्प्रतीक्षानिरास प्रतिपाद्याभियद्यु । तस्य तावदेव चिर
विमोक्षे अथ सपत्स्य इत्याद्या, अपराः परिपक्वगोधूमकण
नीय प्रारब्धकर्म अनुद्रास्य भोग विना तत्क्षयाभाव प्रति
अपरा–सूर्याय जुष्ट निर्वपामि अग्नये जुष्ट निर्वपामीत्या
द्धवि परिवेषय सास्तत्र तात्पर्यं हित्वा, तथा अपरा–अह
ग्रातुर्मास्ययाजिनः सुकृत भवति, अपाम सोममृता अभूमे
, शिशून् अज्ञान्, पयःस्थानीय कर्मफलप्रक्षयत्वेन प्रतिप
यस्तत्र तात्पर्य्यं हित्वा । यद्वा, सर्वकर्मा सर्वकामः सर्वग
स इत्याद्या , परिवेषयन्त्य', ऋत पिबन्तौ सुकृतस्य ले
ान्याः पय स्थानीय सुकृतफलपान चेतनकर्तृक प्रतिपादन
श्चिव, स होवाच प्राणोऽहमस्मि प्रज्ञात्मान मामायुरमृतमि
त्याद्या. पतीन् स्वर्गादिपतीन् इन्द्रादीन् प्रतिपादयन्त्यस्त
ादनतात्पर्य्यं हित्वा, काश्चित्तु, यस्य ब्रह्म च क्षत्र च उभे भ
न. मृत्युर्यस्योपसेचन क इत्था वेद यत्र स इत्याद्या अन्
र्तृकाऽशन प्रतिपादयन्त्यो भोजनमृत्स्वादिरूपमपास्य तत्प
न विहाय, तथा अन्या , यतो वा इमानि भूतानि जा
जातानि जीवन्ति यत् प्रय त्यभिसविश तीत्याद्याः, लि
लेपनमध्यारोप प्रतिपादयन्त्य । अन्या, अथात आदे
नेति, नेह नानास्ति किञ्चन, अस्थूलमनण्वित्याद्या प्रप
: प्रकर्षेण मार्ज्जनमपवाद प्रतिपादय त्यः। काश्चन, अनीश
शति मुह्यमान', यः सर्वज्ञ' सर्ववित् सर्वस्य वशी सर्वस्येश
द्या, लोचनस्थानीये जीवेशचैतन्ये अज्ञयन्त्य उपाधिमत्त
पादन्त्य । काश्चित्तु, त्व वा अहमस्मि भगवो देवते, अह
सि, तत्त्वमसि, अह ब्रह्मास्मीत्याद्या , न्यत्यस्तवस्त्राऽऽभर

स्वरूपाच्छादकम्—अह कर्तेत्यादिप्रतीत्यापादकं जीवत्व व नीयम् । देहगन्धो गलक्षतिप्रतीत्यापादकमीश्वरत्वमाभरणस्थ म् । व्यत्यस्त व्यतिहारेण प्रतिपादिते वस्त्राभरणे याभिस्ता व्यत्यस्तौ सम्यक्परिक्षिप्तौ वस्त्राभरणस्थानीयो आवरण याभिस्ता । तत्राप्यऽपि बहिर्मुखता विहाया तदुन्मुखा ज पि दृष्टव्यम् ॥ ५ ॥ ६ ॥ ७ ॥

ननु, रक्षत क यां पिता विवाह पति, पुत्रस्तु वार्द्धके * ज्ञातयस्ता न स्वात न्त्र्य क्वचित् स्त्रिय, इत्युक्ताना रक्ष विघ्नभूताना सत्त्व कथ कृष्णा तक यमुरित्याशङ्क्य, त्व सुप्ता विचरति निर्भया विनायकानीकपमूर्द्धसु प्रभो * इ वात् कृष्णाकृष्टचेतसां न विघ्ना, प्रभवन्तीत्याशयेनाह ।

ता वार्यमाणा पितृभिः पतिभिर्भ्रातृबन्धुभि ॥
गोविन्दापहृतात्मानो न न्यवर्तन्त मोहिता ॥ ८

ता इति ॥ तत्र चतुर्विधा गोप्य, पद्मपुराणेऽभिहिताः । एक या काश्चिन्नित्यसिद्धा । काश्चित्साधनसिद्धा, ।
तत्र नित्यसिद्धा ह्लादिनीशक्तिरूपा । आन दचिन्म प्रतिभाविताभिस्ताभिरिति * ब्रह्मसंहितायामुक्तत्वात् । ह्लादि महाशक्तिरिति * बृहद्गौतमीयाच्च । तथाच सच्चिदान परमात्मा गोपालरूपमनन्यातगोपालिकारूप चादाय र्थ प्रकाटत गोलोके क्रीडति । स चात्र ताभि सार्द्धमवतीर्ण तासा नित्यसिद्धत्वादिकमुच्यते। द्वितीयास्तु काश्चिद् गोपीव लभोपासनया प्राप्तगोपीभावा गोलोकं प्राप्य भगवता लब्ध अत्रावतीर्णा, । काश्चिद् सम्प्रति गोकुले एव प्राप्तगोपीभा

पूर्वोपासनकात्यायिनीव्रताचरणादिसाधनसिद्धत्वात् सा
द्धाः । श्रुत्यादयस्तु सर्वा अपि साधनसिद्धा एव । साधन
निरादि । तदुक्तं बृहद्वामनपुराणे । कन्दर्पकोटिलावण्ये
मनासि न * कामिनीभावमासाद्य स्मरक्षुब्धा यमशय.
। त्वल्लोकवासिन्य कामतत्त्वेन गोपिका * भजन्ति र
ा चिकीर्षाऽजनिता तथेति ऋषीणां श्रीमद्रामचन्द्रप्रसाद
पेकाज समाभिरुक्ता । पाद्मोत्तरखण्डे, पुरा महर्षयः सर्वे द
ण्यवासिन * दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् स्वविग्रहम्
र्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले * हरिं सम्प्राप्य
ततो मुक्ता भवार्णवादिति । श्रीमद्राममवलोक्य स्वोपास्यगो
ग्रह हरिं स्मृत्वा तमेव भोक्तुमिच्छावता लज्जया तदद्भुत
तरोरिवादत्तापि श्रीरामादभीष्टसिद्धिर्जातेत्यर्थः । सम्भव
स्त्रेय * इति प्राग्भवीयभगवदाराधनलब्धब्रह्माज्ञयावतीर्ण
ङ्गनानां साधनसिद्धता । तत्र, नते सुरेशा ऋषयो नचैक
क्तत्वात् सुराणामृषीणां च गोपालादिरूपेणावतीर्णत्वाद्गो
ा स्वपतिभिर्दैवविवाहादिकम् । ऋषिचरीणां तु ऋषीणां
ोरूपेणावतीर्णत्वात् स्वस्वरूपभूतैरेव पतिभिर्विवाहादिक
ना कासाञ्चित्तु तत्तज्जातिपाद्यार्थे प्राप्तगोपालरूपैः । भग
पादिकानां नित्यसिद्धगोपीनां च स्वसमानमायामयविग्रहा
मायया प्रकटीकृतैर्गोपैर्वा विवाहादिकं सञ्जातम् । तत्र
ो भगवत्प्रतिपादिकाः श्रुतयश्च सर्वा अप्यभिज्ञाः, साधनसि
ना देवकन्यानां च मध्ये काश्चिदभिज्ञाः, काश्चिदनभि
नित्यसिद्धानां मध्ये भगवत्सङ्कल्पानुसारेण नरनाट्यमवलम्
श्च मानिन्यः, काश्चिद्दक्षिणाः । भगवत्स्वरूपप्रतिपादकश्रुती
ऽपि अलं नरसनाऽखण्डार्था गृहीतमानिनीस्वरूपाः । अन

गृहीतदक्षिणारूपाः । तत्रैवम्भूतानां गोपाङ्गनानां मध्ये
त् पितृभि ,काश्चित् पतिभिः,काश्चिद् भ्रातृभिः,काश्चिद् ब
, काश्चित् पुत्रैरित्यपि द्रष्टव्यम् । वार्यमाणा अपि न न्यव
। गोवि देन वेदोद्धारकेण गोलोकविहारिणा गवेन्द्रेण
वता अपहृत आत्मा अ तःकरण यासां ता. । तथाचान्तः
ऽऽरूढेन भगवताऽपहृता तःकरणाना श्रौत्र निवारणमकिं
त्म् । प्रवाहपतितनौकाया स्थितस्य तिष्ठ तिष्ठेति निवारण यथ
भयात् स्वधर्माद्वा ता स्वान्त'करण निरुद्ध्य किमिति
त्ता इत्याशङ्क्याह ॥ मोहिता इति ॥ भगवत्स्वरूपासक्त्युत्व
या भयाद्यनुसन्धाननिवर्तक व्यामोह गता । ननु तै' पि
भि. सर्वथा किमिति न निवारिता इति वाऽऽशङ्क्याह ॥
ा इति ॥ तथाच मूर्च्छां मृत्यु वा गन्तु प्रवृत्ता अतस्तैस्त.
मिरणादिभयान्न प्रसह्य वारिता इति भाव' ॥

निवृत्तिपक्षे ता' श्रुतय पितृपत्रादिस्थानीयैर्वैदिकत्वाभि
भेर्वादिभिर्वार्यमाणा । गोवि देन वेदैकगम्येन परमात्म
हृतात्मान स्वीकृताभिप्रायाः, न न्यवर्तन्त । यतो मया
रा मयायै वा ऊहिताः । वृत्तयाऽपि पित्रादिभिर्विषयैर्वार्यमा
वे गोविन्द निलीनस्वरूपा , मया ममया ऊहिता अनुकूलतव
ो न न्यवर्तन्त विषयाभिमुख्य न प्राप्ताः ॥ ८ ॥

अथ जन्मा तरेषु मोक्षाभिकाङ्क्षया कृतया गोपीजनवल्लभ
ानया लब्धगोपीभावानामवस्थामाह ॥

अन्तर्गृहगता काश्चिद्गोप्योऽलब्धविनिर्गमा ॥
कृष्ण तद्भावनायुक्ता दध्युर्मीलितलोचना ॥ ९ ॥

॥रिति॥काश्चिद् गोप्यो मोक्षप्रदभगवत्सङ्कल्पानुसारेणपतिभिः

ा मुद्रितत्वाद् तर्गृहगता अलब्धविनिर्गमा कृष्ण द्ध्युःमरणाद
थतौ तमेव मेष्ट द्ध्यु ।यतो यस्य सर्वदा भावना भवति तदेवा
ले ध्यानपथमारोहति । ताश्च सर्वदा कृष्णभावनायुक्ता अ
ाशयेनाह॥तद्भावनायुक्ता. ॥ नेत्रद्वारान्यत्र चित्तवृत्तिगमन
मीलितानि लाचनानि यासा ताः । ध्यानावेशेन मुद्रितने
वा। यद्वा मीलितानि लोजनानीतरज्ञानानि यासा ता ।का
—काश्चिन्नित्यसिद्धादिगोपीसङ्गभाग्याभावादलब्धप्रेमत्वादद
ा या गोपैर्व्यूढा गोपोपभुक्ता अपत्यवत्सो बभूवु ।ता खलु तद
मेव नित्यसिद्धादिगोपीसङ्गभूम्ना कृष्णसङ्गस्नेहोद्रेकात् ता
ापात्रीभवन्त्योऽपि कृष्णाङ्गसङ्गायोग्यदेहत्वेन योगमायया र
यकरणात् पतिभिर्वारिता. कृष्णमभिसर्तुमक्षमा महाविपद्
पतिभ्रातृपुत्रादीन् स्वप्राणचौरत्वेन पश्य त्यो मरणदशार
स्थितायासता, यथाऽ या मात्रादिस्वबन्धुजन स्मरन्ति त
ाणिकबन्धु कृष्ण सस्मरुरिति वर्णयति ।

निवृत्तिपक्षे, स एष रसाना रसतम परम परार्द्ध्योऽष्ट
ीथ इत्याद्या उद्गीथादिरूपा तर्गृहगता अपि काश्चिद् गोप
तः सम्बन्धिन्य., अलब्धो विशेषेण निगम. प्रतिपादन य
ास्तस्य परमात्मनो भावनायामुपासनाया युक्ता नियुक्त
द्ध्यु. परमात्मध्यान विदधु' । यतोऽविचारेण मुद्रितप्र
र्थप्रकाशा । तथाचोद्गीथादिस्तुतिपरतायानिरुद्धा अपि त
स्थुरित्यर्थ' । वृत्तयोऽपि काश्चिदत्र तत्प्रियवस्तुरूपगृहान्तग
ब्धविनिर्गमा अपि तत्र कृष्णभावनायुक्ता कृष्ण द्ध्यु
विषयप्रकाशा इति ॥ ९ ॥

तथाच वर्तमानकालीनविरहध्यानाभ्यां पूर्वोपासनया लब्ध
स्वाभिसन्धिन फल प्रापुरित्याह ।

दुःसहप्रेष्ठविरहतीव्रतापधुताऽशुभाः ।
ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः ॥ १०

दुःसहेति ॥ दुःसहो यः प्रेष्ठविरहो मद्गानभिस्तेन यस्ती
स्तापः = कोटिब्रह्मकल्पेषु कुम्भीपाकादिनरकेषु यावद्दुःख भ
ततोऽप्यधिक भगवद्विरहक्षणमात्रेण जात दुःख, तेन धुतानि ि
तानि भस्मसात्कृतानि अशुभानि यासाम् । तथाच सर्वपापफल
गसमाप्ति । पुण्यक्षयप्रकारमाह । ध्यानेन प्राप्तो योऽच्युतस्य
दैकरसस्य परमात्मन आश्लेष सम्यगालिङ्गनम् । तदानी
जारत्वेन आश्लेष', किन्तु परमात्मत्वेनेति बोधयितुमच्युतपद
तेन या निर्वृति = सुख—कोटिब्रह्मकल्पेषु स्वर्गादौ याव
भवेत् ततोऽप्यधिकभगवत्संश्लेषे क्षणमात्रेणानुभूत, तया क्षीण
मङ्गलानि पुण्यानि यासाम् । तथाचैव पुण्यस्यापि क्षयः सपन्न'
चित्तु—दुःसहेन प्रेष्ठविरहेण यस्तीव्रस्तापस्तेन धुतानि कम्पित
अशुभानि याभिस्ताः । यासा प्रियविरहतापस्य तीव्रता वी
कोटिब्रह्माण्डस्थवाडवानलमहाकालकूटादिरूपाणि पर सह
ण्यपि अशुभानि स्वतीव्रताहङ्कार परित्यज्य पराजयबुद्ध्या च
म्पिर इत्यर्थः । ध्यानेन प्राप्त आगतो योऽच्युतस्तेन तदेवो
तस्य प्रेमपूर्णचि मयस्य तादृशस्वभावदिमतो देवस्य य आश्लेषः
या निर्वृतिस्तया क्षीणानि कृषीकृतानि मङ्गलानि प्राकृतानि य
ता' । यासा स्फूर्तिप्राप्तेष्टाश्लेषोत्थसुख वीक्ष्य कोटिब्रह्माण्ड
विषयसुखानिर्विषयब्रह्माऽनुभवसुखसहस्राणि मङ्गलशब्दवाच्य
क्षीणानि। यदपेक्षया निकृष्टानि बभूवुरित्यर्थ इति वर्णयन्ति ।
परमपुरुषार्थत्वेन प्रतिपादितस्य निरतिशयस्य ब्रह्मानुभवानन्द
क्षीणत्ववर्णन, य लब्ध्वा चापर लाभ मन्यते नाधिक तत *

त्वाज्ञानविजृम्भितमिति ॥
ष्टान्तपक्षे—दुःसहो य प्रेष्ठस्य परमात्मनो विरहः—अत्र
पासना नास्तीति केनचिन्निरूप्यमाणस्तेन जातो यस्तीव्र-
धुतानि अशुभानि याभिस्ताः । तथा ध्यानेन परमात्मो-
याऽच्युताश्लेषस्तेन केनचिद्विदुषा वर्णितेन या निर्वृति-
तुभूतया क्षीणानि क्षीकारितानि मङ्गलानि याभिः ।
ीणानि न नाशितानि च मङ्गलानि याभिस्ताः । इतिपक्षे
. ॥ १० ॥

। परमात्मानं जारबुद्ध्यापि सङ्गताः ॥
ुणमयं देहं सद्यः प्रक्षीणबन्धनाः ॥ ११ ॥

. एवमतः सद्यः प्रक्षीणबन्धनाः ॥ तत्क्षण एव प्रकर्षेण
ारब्धकर्मकृतं बन्धनं यासां तास्तथाभूताः सद्यो गुणमयं
। त्रिगुणमयं स्थूलसूक्ष्मकारणाख्यशरीरत्रयं जहुर्विमुक्ता
। ननु प्रसङ्गमिन्नब्रह्मसाक्षात्काराभावात् कथं तासां मुक्ति-
ायामाह ॥ जारबुद्ध्येति ॥ यद्यपि तासां भगवति जार-
सीत् तथापि वस्तुमाहात्म्याद्भगवत्प्रसादो जातः । न हि
र्त्तबुद्धिमपेक्षते । अन्यथा बुद्ध्यापि पीतममृतं यथा ।
भगवत्प्रसादे तवैव प्रसङ्गाभक्तपरमात्मानं सङ्गतास्तत्प्रसाद-
क्षात्कारेण तद्विमुक्ता प्राप्ता इत्यर्थः । अपिशब्दस्तद्-
द्यत्वाभिव्यञ्जनद्वारा वस्तुमहिम्ना तदतिमात्रास्त्समभिव्य-
यथा प्रथमं जारबुद्ध्यापि भगवता सङ्गताः पश्चाद्विरह
ध्यानादिना भगवत्स्वरूपं ज्ञात्वा ततः प्रक्षीणबन्धना
वमुक्ता इत्यर्थः । तथाच सर्वमपि निकृष्टमुत्कृष्टसम्बन्धादुत्कृ

ष्टं भवति । यथा भगवत्सम्बन्धाद्गोपा ब्रह्मादीनामपि द
माप्ताः । तत्कृत चौर्य्य कर्म स्मरणादिनाऽप्यनेकाशुभनाः
तत्सम्बन्धाद्गोवर्द्धनस्ये द्रादेरप्युत्कर्ष' । शान्तिरमादति
शृङ्गाररसस्य तत्राप्यौपपत्यसम्बान्धिनः सर्वपरमहंसचूडाम
मुखन गीयमानत्वम्। गुञ्जागैरिकशिखिपिच्छादेर्ब्रह्मादिभि
मानत्व सारथ्याद' परमश्रियक्षणीयत्व चेति भावः ॥

निवृत्तिपक्षे—तमेव, रसो वै सः रसं ह्येवाऽयं लब्ध
न्दी भवतीत्यादिश्रुतिप्रतिपादित परमरसरूप जारबुद्ध्या तत
पतौ या उपासनाबुद्धिस्तद्विधायकतयाऽपि सङ्गतास्तस्मि
ङ्गतिमत्य । अत एव सद्यो विचारक्षण एव प्रक्षीण ब ध
माणाथव धनकारण यासां ता. । गुणमयम् उद्गीथादि
तिमय देह तत्परत्व जहुः।वृत्तिपक्षे जारबुद्ध्यापि सङ्गता
देह यदा जहुस्तदा किमु वक्तव्य मेष्टबुद्ध्या सङ्गता
ऽन्तःकरणवृत्तय इति योज्यम् ॥ ११ ॥

ननु तमेव विदित्वाऽतिमृत्युमेति ना य' पन्था विद्य
य, यदा चर्मवदाकाश वेष्टयिष्यन्ति मानवा' * तदा देव
दु.खस्यान्तो भविष्यति, ऋते ज्ञाना न मोक्ष इत्यादिश्रुत्या
मोक्षसाधनत्वाभिधानम् । तच्च ज्ञानमह ब्रह्मास्मीत्यादिरू
त्मानमात्मतया विचक्षते*इत्युक्तत्वात् तत्त्वमस्यह ब्रह्मास्
श्रुतश्च । तत्साधन च भक्तियोगः । यस्य देवे परा भक्ति
तथा गुरौ * तस्यैते कथिता ह्यर्थाः प्रकाश ते महात्मनः
वृणुत तेन लभ्य., मच्चित्ता मद्गतप्राणा बोधयन्तः परस्
कथय तश्च मा नित्य तुष्यन्ति च रमन्ति च * तेषां सतत
भजतां प्रीतिपूर्वकम्*ददामि बुद्धियोग त येन मामुपयान्ति
भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वत * पुरे

। योगिनस्त्वदर्पितेहा निजकर्मलब्धया * विशुद्धय भक्त्या
ीतया प्रपेदिरेऽञ्जोऽच्युत ते गति परामित्यादिशास्त्रात् ।
कृष्णे ब्रह्मबुद्ध्यभाववतीना जारबुद्ध्या कथ मोक्षः । न
पुत्रादीना वस्तुतो ब्रह्मभूतानामपि भजनेन मोक्षो भव
शङ्कानिवृत्त्यर्थ राजा पृच्छति ॥

राजोवाच ।

। विदुः पर कान्त न तु ब्रह्मतया मुने ॥
प्रवाहोपरमस्तासा गुणधिया कथम् ॥ १२ ॥

ष्णामिति ॥ कृष्ण पर केवल का त कमनीय पतिं वा
विदुः । यद्वा पर परपुरुष कान्त स्वरमण विदु. । न
रूप विदु' । अतो गुणधिया गुणकार्यविषयाक्रान्तबुद्धीना
हस्य ससारस्योपरमो मोक्षः कथम् । मुनिर्भवानेतन्निर्णय
र्थोऽसीति सूचयन् सबोधयति । हे मुन इति ॥ विषय-
रे मोक्षसिद्धौ श्रवणमननादेर्वैयर्थ्य स्यादिति वा स
ायः ॥
वृत्तिपक्षे कृष्ण सदानन्दरूप पर कान्त परमरस ब्रह्म
ावुद्ध्या न विदुः नावेदयन्ति। अतो गुणमात्रधिया तासा
ह उद्गीथादिगुणवर्णने यो प्रवाहस्तस्योपरमः कथम् ।
पि या कृष्ण ब्रह्मतया न विदुस्तासां गुणप्रवाहोपरमः
न हि ब्रह्माकारता विना गुणप्रवाहोपरमो भवतीति
१२ ॥
हो एवविधरसवत्यां कथाया प्रतिबन्धकमात्रम् उक्तोत्तर
रोतीत्यभिप्रेत्य सामर्षमाह श्रीशुक. ॥

श्रीशुक उवाच ।

उक्त पुरस्तादेतत् ते चैद्य. सिद्धि यथा गत ॥
द्विषन्नपि हृषीकेश किमुताऽधोक्षजप्रिया. ॥ १३ ।

उक्तमिति ॥ पुरस्तात् सप्तमस्कन्धे उक्तमप्यमुमर्थं पृष्ट॰ करुणया पुन स्मारयति। चैद्य शिशुपाला हृषीकेश भगव त षन्नपि सिद्धि गत । हृषीकाणामिन्द्रियाण मीश नियन्तारमित्य यथाधिकार द्वेषादिक भगवत्प्रेरणयैव भवतीति सूचितम् । य ऽनावृतैश्वर्य द्विषान्नत्यनेनावृतब्रह्मभावाना जीवाना परस्पर द्वे दिना सिद्ध्यभावेऽपि कृष्णऽनावृतब्रह्मभावे यथाकथञ्चि मनःम सिद्धिर्भवतीति ध्वनितम् । यथैव तथा पुरस्ता मयोक्तम् । तथ कृष्ण विरोधिवृत्त्यापि यदि सिद्धिर्भवति तर्हि परमानुकूलवृत्त सक्तचेतसा गोपीना सिद्धिप्राप्तौ कि चित्रमित्याह ॥ किमुतेति अधोऽक्षज प्रियो यासा ताः। अधोऽक्षजस्य प्रिया इति वा। अ अक्षजन्य ज्ञान यस्मादित्यर्थकेनाधोऽक्षजपदेन, अशब्दमस्पर्शमरू मव्ययमित्यादिश्रुत्या सर्वगुणातीतम् आवरणविनिर्मुक्त परमात्म जारबुद्ध्यापि सेवन्तीना या बुद्धयस्ता वस्तुमाहात्म्याद् ब्रह्मबुद्ध एव, न गुणबुद्धय इति ध्वनितम । सप्तमस्कन्धे चेत्थमा हितम् । तस्म द्वैरानुबन्धेन निर्वैरेण भयेन वा * स्नेहात् का वै पुण्यात् कथाञ्चनेक्षते पृथक् * कामाद् द्वेषाद्भयात् स्नेहाद्यथ भक्त्येश्वरे मनः * आविश्य तदघ हित्वा बहवस्तद्गति गता गोप्यः कामाद् भयात् कसो द्वेषाच्चैद्यादयो नृप * सबन्ध वृष्णयः स्नेहाद् यूय भक्त्या वय विभारिति । यद्वा पूर्व, ब्रह्मन परोद्भवे कृष्णे इयान प्रेमा कथ भवेत् * यो ऽभूतपूर्वस्तोके स्वोद्भवेष्वपि कथ्यतामिति पृष्टवतस्तत्रैतदुत्तर तदुत्तरकथनन म

सर्वेषामपि भूताना नृप स्वात्मैव वल्लभ. । * इतरेऽपत्य
स्तद्वल्लभतयव हि * कृष्णमेनमवेहि त्वमात्मानमखि
। * जगद्धिताय सोऽप्यत्र देहीवाभाति माययेत्यादिना ।
समुमेऽप्याभहितमित्याह यथा वा ॥ चैद्य इति ॥
क्षेऽपि समानमिद पञ्चश्लोकात्मक प्रकरणम् ॥ १३ ॥
क्तत्त्वज्ञानानधिकारिणोऽप्युद्धर्तव्या इतीच्छयैव भगवद
ातो यदर्थ भगवदवतारस्तस्मिन्नेवार्थे भवत शङ्का न यु
ाशयेनाह ।

नि श्रेयसार्थाय व्यक्तिर्भगवतो नृप ॥
यस्याप्रमेयस्य निर्गुणस्य गुणात्मन ॥ १४ ॥

ामिति ॥ भगवतः षड्गुणैश्वर्यसपन्नस्याभिव्यक्तिकार-
याभिव्यक्ति प्रादुर्भावो नृणामविशेषेण सर्वेषा नि.श्रेय
ाक्षात्परम्परया वा मोक्षरूपपरमपुरुषार्थलाभायैव, नतुभू-
रसादिरक्षाय । भ्रूविजृम्भमात्रेणान तकोटिब्रह्माण्डसहार
क्वचित्सहारकशक्तिलेशमात्रावतारेणाऽपि तस्य सुकर-
न च नृणा नि.श्रेयसमन्यथा सुकरम् । भक्तितत्त्वज्ञानयार
गोऽत्यन्तदुर्लभत्वात् । मनुष्याणा सहस्रेषु कश्चिद्यतति
* यततामपि सिद्धाना कश्चि मा वेत्ति तत्त्वत इत्यादिवा-
। न च भगवदिच्छया तत्सुकरम् । तस्या अपि जीव
ात्वात् । अ यथा वैषम्यनैर्घृण्यापातात् ।
करुणासागरो भगवान् समारानलेपापच्यमानाञ्जीवाना
तरतीति भाव । यथा नृपरूपेण भगवतोऽवतरण नृणा
।, तद्वदिति सम्बोधनाशय. । अनेन जीवेनात्मनाऽनुप्र

विश्य नामरूपे व्याकरवाणीति श्रुत्या परमात्मनो जीवरू
प्रवेशो नामरूपात्मकससारविस्तारायोक्तः । प्रविष्टस्य तिरोहिर
परमात्मनः पतिपुत्रादिरूपेण स्थितस्य समृतिचक्रारूढस्य स्नेहा
सबन्धेन समृतिचक्रे भ्रमणातिशय एव, न तु तन्निवृत्तिः ।
भगवतस्तु अभिव्यक्तिरित्युक्तमता यत्स्वरूपसाक्षात्कारेण मो
श्रुतिमस्तकेष्वभिहितस्तत् स्वरूप भगवति अभिव्यक्तमेवासीसाश
भगवन्त विशिनष्टि ॥ अव्ययस्येत्यादि ॥ अव्ययस्यापक्षयरहित
सत्यस्य यतोऽप्रमेयस्य प्रत्यक्षादिप्रमाणज यद्वृत्तिप्रतिफलितचैतन्य
ऽविषयस्याऽदृश्यस्य दृग्रूपस्य, तत्रापि हेतुमाह, निर्गुणस्य॥प्रत्यक्
दिप्रवृत्तिहेतुगुणविनिर्मुक्तस्य, सत्य ज्ञानमनन्त विज्ञानमानन्द ब्र
विज्ञातारम् अरे केन विजानीयात्, यत्र त्वस्य सर्वमात्मैवाभ
तत् केन क पश्येत्, यत्साक्षादपरोक्षाद् ब्रह्म, साक्षी चेता केव
निर्गुणश्चेत्यादिश्रुतेः । तथाच सत्यज्ञानान दात्मकस्यानावृतस्य प
ब्रह्मणो नन्दनन्दनादिरूपेणाभिव्यक्तिर्न तु जीवस्येव जडदेहाद
भिमानेन तिरोधानम्। तस्माद्विपबुद्ध्यापि पीतममृत यथा अमरत्व
यैवावकल्पते तथा जारत्वादिबुद्ध्याप्याराधितो भगवान्मोक्षाय
वावकल्पते इति, न कोऽपि विरोध । ननु यथोक्तस्य निर्गुणस्
परमात्मनो महावाक्यज पाखण्डार्थवृत्त्या आवरणभङ्गमात्र सम्प
द्यते । स तु स्वयप्रकाशत्वात् स्वयमेव प्रकाशते । तस्मात् क
चक्षुरादीन्द्रियजन्यवृत्तिविषयाकारणाभिव्यक्तिः । न हि दृश्य
मानघटपटाद्याकार ब्रह्माभिव्यक्तमित्युच्यते । अतो भगवद्विग्रहस्
दृश्यमानत्वमभिव्यक्तब्रह्मरूपत्व चेत्येतदुभय विरुद्धमितिचेत् तत्रा
ह ॥ गुणात्मन इति ॥ गुणाना सत्त्वरजस्तमसा तदात्मिकाय
महामायादिशब्दप्रतिपाद्यायाः प्रकृतेरात्मनो नियन्तुः सत्तास्फूर्ति
प्रदस्याधिष्ठानचैत यस्य । तथाच सच्चिदानन्दरूपे परब्रह्मणि सर्वथा

ध्यज्ञानाहङ्कारादिक यथा प्रतीयते, तथा साधकाऽनुग्रहा-
त्सत्तद्विग्रहरूपेण भानमपि न विरुद्ध्यते । तत्राज्ञानादी
रकारणत्वात् तद्भान ससारापादकम् । भगवद्विग्रहस्य
र्थ प्रकटितत्वात् तद्दर्शनादिक मोक्षकरमिति विशेषः । प्र
ामधिष्ठाय सम्भवाम्यात्ममायया * माया ह्येषा मया सृ-
। पश्यसि नारदेत्यादिशास्त्रात्स्वेच्छोद्बोधिततद्विग्रहभाना-
ायाशक्त्या तथाभूते परमात्मनि तत्तदाकृतिभानमिति सर्व
ः ॥ १४ ॥
अतो यथाकथञ्चिद् तदासक्तिर्मुक्तिकारणत्वाद् सम्पा
॥

ः क्रोध भय स्नेहमैक्य सौहृदमेव वा ॥
य हरौ विदधतो यान्ति तन्मयता हि त ॥ १५ ॥

ाम प्रेममय रिरसामय वा । गोप्यादय । क्रोध द्वेष शिशु
य. । भय कसादयः । स्नेह पाण्डवादय. । ऐक्य सम्ब ध
दय । सौहृद भक्ति नारदादय' । ऐक्यमभेदमात्मारामा इति
ान तु सम्ब धाद् वृष्णय इति पूर्वोक्तविरोधादस्य यथा
यथाकथञ्चिद्रूपत्वाभावात् स्वामिभिर्न कृतम् । नित्य हरौ
र्णायावतीर्णे भगवति विदधत' कुर्वाणा ये ते त मयता म
ान दस्वरूपभगवत्स्वरूपता यान्ति । एवकारेण प्रत्येक स
ात्वेन कामादीना म येऽ यतमस्य यथाधिकारमवश्यकर्तव्यता
ति । वाकारेण कामादीना त मयताप्राप्तौ प्रत्येक स्वात त्र्य
ति । एवकारस्य या तीत्यनेनापि सम्ब ध । तथाच या त्ये
ा त्र बाधितम् । नित्यमित्यनेन शूर्पणखादिवद् व्यभिचारि
ादिव्यावृत्ति । यान्तीति वर्तमानापदेशेनेदानीमप्येव विद

घनो यान्स्येरेति द्योतयति ॥ १५ ॥

ननूक्तेऽप्यर्थे विस्मयाच्छिष्येण पुनः प्रश्नः क्रियतेऽतः वि मिति सामर्थ भवद्भिरुत्तरं दत्तमिति चेदप्रसिद्धे ह्यर्थे उक्तेऽपि क दाचिद्विस्मयवशात् पुनः प्रश्नो भवेदनेकवारमनुभूते समस्तशास्त्रे षु प्रसिद्धे परमात्मसुखात् सम्यक्छ्रुते समनस्कस्य विस्मयोऽ कर्त्तुमयोग्य इत्याशयेनाह ॥

नचैव विस्मयः कार्यो भवता भगवत्यजे ॥
योगेश्वरेश्वरे कृष्णे यत एतद्विमुच्यते ॥ १६ ॥

नचेति ॥ गुणप्रवाहेऽसम्भावनालक्षणो विस्मयो, भवता ग गर्भवासकालादारभ्यैतावत्कालपर्य्यन्तं भगवन्माहात्म्यमनुभूतवता अवारितमपि ब्रह्मास्त्रं यो वारितवाँस्तस्य स्वेन निवर्तनीयसंसार निवर्तने कः परिश्रम इति सर्वविस्मयनिवारकज भवता ज मकाहे असौ मद्रक्षक इति परीक्षणेन परीक्षिदिति न भवता न च कार्य्य कदापि न कर्तव्यः । एवम्भूतो विस्मयस्त्वज्ञानामश्रद्दधानानां स शयाविष्टचेतसां भवति, न तद्विलक्षणानां भवादृशानाम् । अज्ञत्वा दिकं तु सर्वानर्थकारणत्वाद् दूरतः परिहरणीयम् । तदुक्तम्—अज्ञ श्चाश्रद्दधानश्च संशयात्मा विनश्यति * नायं लोकोऽस्ति न परो न सुखं संशयात्मनः * इति । तत्रापि भगवति षड्गुणैश्वर्य्यस म्पन्ने, येन तस्योद्धारो यद्विषयकाङ्क्षया वा तस्य प्रतिबन्धस्तदाविर् र्भावेन तदाकाङ्क्षापूर्त्तौ वा मोचनसमर्थः । अतः एवाऽजे जन्महेत्व ऽविद्याकामकर्मवासनादिविनिर्मुक्तत्वाज्जन्मशून्ये, लोकानुग्रहायावि र्भूतत्वाद्दिव्यजन्मादिमत्त्वेऽपि नास्य जन्मादिव्याघात इति भावः । किञ्च, योगेश्वरेश्वरे॥योगेश्वरा ब्रह्मादयस्तेषामपीश्वरे आदिकारणे नियन्तरि स्वाजत्वमहेश्वरत्वादिज्ञानवतोऽपि मुक्तिप्रदे । तदुक्तम्—

र्हि देवाना म॰र्षीणा च सर्वेश॰ * यो मामजमनादिं च
कमहेश्वरम * असम्मूढ॰, स मर्त्येषु सर्वपापैः प्रमुच्यत इति।
प्रसादाद्योगश्वरा अपि मोक्षदानक्षमास्तेषामीश्वरे को वि-
त्र भिभि पद्मेर्मोचनसामर्थ्यमभिधाय, किञ्च मुक्तप्राप्यो-
र॰याह ॥ कृष्णे सदानन्दस्वरूपे यतो येन केनापि प्र-
श्रनादितच्चराचर सर्वमपि विमुच्यते ।

ाच कुसुमशर्मे, प्रादुर्भूतञ्च माधुर्यार्थसमूहे, स्वस्यापि मो
गादि्गु ने, मान्द नन्दानन्दस्वरूपे, अनृतजडदु लदेहादि-
ापभे मीनेऽस्त्येन निमग्नो, न तु यथोक्ते परमात्मनि,
भवत इति भाव ॥ १६ ॥

हूक्रम, इत॰ परम अत्र प्रश्नोत्तराभ्यां लोकोत्तरसुखाया
क्रीडाकथाया विच्छेदकाभ्यामिति भवनयन् स्वयमेव प्र-
रति ।

ष्ट्वाऽन्तिकमायाता भगवान् व्रजयोषित ॥
दू वदता श्रेष्ठो वाच पेशैर्विमोहयन् ॥ १७ ॥

इति ॥ ता स्वय कलगीतेनाहूता', अतो व्रजयोषितो
। वासयोग्या अपि झटिति स्वसमीपमागता उपलभ्य ।
व्रजयोषित सर्वदा व्रज एवोपलब्धास्तदानी स्वस्य वने
ान्तिकमायाता दृष्ट्वा, वाच पेशैर्विलासै॰ स्वचित्तानुसारेण
नार्थमनीतिजनकैः पूर्व कलगीतेन मोहिताः पुनर्विशेषेण
अभाषत । यतो वदता सर्वेषा वक्तृणा म ये श्रेष्ठ । यतो
। इद च व्यामोहोत्पादन विक्षेपप्रमोद्भवाय। तथाच या॰
धैर्याभावाद् बहिरपि प्रार्थया त तास्मा प्रेम्ण उपे
त्वोद्दीपन भवति । यास्त्वन्तरत॰ प्रार्थनावसोऽपि धैर्यव-

शान्मानरसो वहिर्नेति नेतीत्येव वदन्ति तासां प्रेम्णः प्रार्थनावाक्यै रेवैतान्नत्रेणोभयार्थवाक्यान्यभिहितवान् । पृथक् यथोक्तार्थवा क्यप्रयोगस्य परस्परफलोत्पादकत्वेन रसाभासकत्वात् । यद्वा सर्वत्रापिशब्दा तर्भावेनेत्थं व्याख्येयम् । व्रजयोषितः स्वाभाविक प्रेमवत्योऽपि, ताः प्रेममयकामविकारं प्राप्ता अपि, अन्तिकमायाता अपि, साक्षाद् दृष्ट्वापि, स्वयं भगवांस्तासां भावज्ञोऽपि, कपटवाक्यै र्व्यामोहयन् वैकल्यं मापयन्नवदत् । यतो नर्मोक्तिवादिषु श्रेष्ठः तथाच नर्मविशेषार्थमेवमभाषतेत्यर्थं ।

निवृत्तिपक्षे भगवानेव वदतां श्रेष्ठस्तत्तद्वादिरूपेण वदतामग्र गण्यः सन् वाचः पेशैरापातरम्यैर्विलासैः, विमया = विरुद्धप्रम या विपरीतसिद्धान्तेन ता ऊहयँस्तर्कयन्नुवाचेत्यर्थः । मोहिताः मन्दमतीन् विशेषेण मोहयन्निति वा ॥ १७ ॥

यदवदत् तदुदाहरति ।

स्वागतं वो महाभागाः प्रियं किं करवाणि वः ॥
व्रजस्यानामयं कच्चिद् ब्रूतागमनकारणम् ॥ १८ ॥

स्वागतमिति॥ तत्र त्रिविधा गोप्यः।स्वावतारं विज्ञाय रमणा भिलाषवत्योऽभिज्ञाः प्रथमाः । जारबुद्ध्या तद्वत्योऽनभिज्ञा द्विती याः । स्वप्रमातिरेकेण वशीकृतप्रेष्ठा मानवत्यस्तृतीयाः । तत्राभि ज्ञापक्षे, वो युष्माकं स्वागतं सुष्ठु शोभनमागमनं जातम् । प्रेष्ठस न्निधावागमनमात्रस्याप्यत्यन्तशोभनत्वात् । यद्वा, स्वागतमिति कुशलप्रश्नः । अतः परमप्रेम्णा समागतानां युष्माकं प्रसन्नोऽ किं प्रियं करवाणि । युष्मन्मनोऽभिलषितप्रियकरस्तेन भवतीनां सन्तोषस्य सम्पादनीयत्वात् । अहो रमणेच्छयाऽऽराधनपराणाम स्माकं मन्दभाग्यत्वादद्यापि सर्वज्ञेनाप्यभिप्रायो न बुद्धो यत प्र

। यद्वा । अस्मत्प्रेमभरतामालोच्यैव वदति तस्मादत पर
ञ्यमिति विचार्य्य खिन्नचित्ता आलक्ष्याऽऽश्वासयति । हे
ः । महद्भाग्य भवतीनाम् । यतो ब्रह्मादिभिरपि प्रार्थनी
प्रधान लब्धवत्यः । यद्वा, महान् भागो भजन यासाम् ।
रेकविनिर्मुक्ताना कथ मत्सम्बन्ध इति भाव । एवमु
। वक्तुमशक्ता व्रजाभिमुख्यः स्थिता दृष्ट्वा पुनराह ॥
। ॥व्रजस्थसम्बन्धिजनस्योपद्रवोपस्थितौ भवतीनामागमन
ादिति मया ज्ञातमत, पृच्छामि । व्रजस्य कच्चिदनामय
ावः सम्प्रति वर्तते । एव श्रुत्वा अहो सर्वज्ञोऽपि भगवान्
पृच्छतीति नरनाट्यमालक्ष्य विस्मयेन म दस्मितवतीरुप
वयमपि म दहसितालकृतमुखसरोरुह आह ॥ ब्रूतेति ॥
कारण ब्रूत । किमिह तूष्णीमवस्थानेन स देहापादकेन ।
ाप्रियप्रार्थनप्रतिबन्धकलज्जाभिभवकारणप्रेमातिरेकसंपाद-
वता ता प्रत्येवमुक्तम् । अनभिज्ञापक्षे, स्वस्मिन्नासक्ताचि
त्कलगीतश्रवणसमकालमेव व्रजाद् बहिर्निःसृत्य स्वसन्नि
ाता, अत एवतासाम त करणस्था भावोऽपि बहिर्नि.सा
याशयेन दाक्षिण्यलक्षणनायकस्वभाव ता ग्राहयितुमव
णनायिकास्वभावमङ्गीकृत्य आह ॥ स्वागतमिति ॥ वः
गमन भवतु । युष्मदागमन स्वस्य शुभसूचकमह लक्षये ।
महाभागा महद्भाग्यलब्धो महान् भाग स्वपतिभजन यासा
स्ता'।तथाच महाभागाना युष्माकमागमन महद्भाग्य सूच-
ावः । अत आज्ञापय तु भवत्यो, वः प्रिय कि करवाणि।
ाचरणेन स्वात्मान कृतार्थ करोमीत्यर्थ । एव विपरीतमा-
नमानसा क्षुब्ध मुखारविन्दा, अहो वृथैव व्रजात सहसा
त्र समागता इति पश्चात्तापेन व्रजाभिमुखीरुपलभ्याह ॥

व्रजस्येति॥यदि व्रजस्य कश्चिद् उपद्रव उपस्थितस्तच्छान्त्या च यु
ष्माकं प्रियं भवति तर्हि वक्तव्यम् । झटित्येव तच्छान्तिं करोमीति
भावः । ननु भोः, चतुरशिरोमणे, तथा सति गोपा आगता स्यु
रितिचेत् तत्राह ॥ ब्रूतेति ॥ युष्मदागमनेन तत्रस्त्रीणामेव काश्चि
दुपद्रव उपस्थित इति तर्कवशान्मयैवमुच्यतेऽतः स्वमुखादपि झटिति
तत्कारणं ब्रूत । अहो एतत्स्वरूपासक्तचित्ताभिरस्माभिर्व्रजस्य दत्त
जलाञ्जलिं जानन्नपि फलकाले किमस्मासु व्रजासक्तचित्ततामारो
प्यैव वदतीति स्वमुखारविन्दाभिमुखीरलोक्याह—ब्रूतेति, वा
तिष्ठतु मदुक्तस्तर्कः, स्वयं वक्तुमुद्यता यूयं स्वमुखादेव स्वागमन
प्रयोजनं ब्रूतेत्यर्थः । यद्वा, ससम्भ्रममाह ॥ स्वागतम् ॥ यतो भव
त्यः पतिपुत्रादिसकलसम्पत्सम्पन्नत्वेन महाभागाः । तथाभूताना
मागमनावकाशरहितानामत्रागमनेन महान् ममातिविस्मयो जातः
इति भावः । तस्माद् युष्माकं किञ्चित्प्रियाचरणे मम महत्युत्कण्ठा
जातेत्याशयेनाह॥प्रियमिति॥यत्प्रियं भवत्यः प्रार्थयन्ति तदहं क
रवाणीत्यर्थः॥एवमुक्ता नर्मोक्तिमबुद्ध्वा लज्जया स्वाभिलषितं प्रियं
प्रार्थयितुमशक्ता व्रजाभिमुखीरवलोक्याह—ज्ञातं मया, व्रजे क
श्चिदुपद्रव उपस्थितः स्याद् यद्भयात् पलाय्य स्वत्राणार्थं मदन्ति
कमागता अतः पृच्छामीत्याशयेनाह ॥ व्रजस्येति॥ तथाच तत्र स
म्भावितोपद्रवशान्तिरूपं प्रियं किं करवाणीति भावः । एवमुक्ते
अहो अस्य धूर्ताधिराजस्यान्यापूर्वोऽयं वाग्विलासो द्रष्टव्य इति
तर्कयन्तीः सस्मितं परस्परं विलोकयन्तीरालक्ष्याह ॥ ब्रूतेति ।
अहो भवतीनां मौनेन मिथः सस्मितनिरीक्षणेन चोपद्रवाभावो
ऽस्तीति मया ज्ञातमतः स्वमुखादेवागमनप्रयोजनं ब्रूतेत्यर्थः । मा
निनीपक्षे, ता दुर्लभदर्शनसम्भाषणाः स्वान्तिकमायाता दृष्ट्वा अतिवि
स्मितत्वात्, सोत्कण्ठमाह ॥ स्वागतमिति ॥ अहो वो युष्माभि

रीचीनमागमन कृतम् । एतादृशाचन्द्रकराभिरञ्जिते स-
नसामग्रीविशिष्टे वने युष्मदागमनाकाङ्क्षया मदवस्थाना
किमिसेव ब्रवीषि, मन्दभाग्यप्रेरिता वयमत्र समागता
ापि न वाच्यमित्याह ॥ हे महाभागाः ॥ एवंविधयौवना
मित्रविधे वने एवात्रधेन प्रियेण समागमो महता भाग्येन
ो नाल्पस्य तपस. फलमिति भावः । अहो नाऽयङ्कोप
के तु कोपोदासीन्यादिक विहाय रमणस्य समयोऽतो
पाचरणेन भवत्यः प्रसन्ना भवन्ति तर्हि किं वर्तते तदह
। दैन्य व्यज्यते । यद्वा, किमेवमुद्वयाऽवस्थिता, यन्युष्माक
ाय तदह जानामि, तदेव च ममापि प्रिय, तद्. प्रिय देश
हृदये सति किं करवाणि । भवतीनामनुज्ञा वर्तते किमिति
क्तिः । एवमुक्ता व्रजाभिमुखीरवलोक्य तासा पलायन
ह ॥ व्रजस्येति ॥ अहो प्रियाः ! प्रियाचरणानुज्ञा कि
दीयते, किमर्थं वा विकसितमुखपद्मा भवस. पुनर्व्रजमव
ाऽतोऽह पृच्छामि । व्रजस्य तु कच्चिदनामयम् । एवमु
ञ्चिद्विकसितवदना ईषत्कटाक्षवतीरवलोक्य सस्मितमाह ॥
आगमनप्रयोजन झटिति ब्रूत । प्रार्थनायां लोट् । किं वा
ीति मया मङ्गयकम्पमपाकुरुतेति दै य व्यज्यते । स-
देसतकार्यनाशकरी लज्जा विहाय कथयतेति भावः ॥
दृस्तिपक्षे, आस्तिको भूत्वा वदति ॥ स्वागतमिति ॥ व.
सुष्ठु आगतम् आगमन भवति । यतो भवत्यो महाभागा.
र्द्भुता अतो युष्माक किं प्रिय करवाणि । अभिधेय
, किं वा ब्रह्म । तदपि किं सविशेषमुत निर्विशेषम्, ए
कर्मप्राप्यमुपासनाप्राप्यमुभयप्राप्य केवलज्ञानप्राप्य, क
वतज्ञानप्राप्य वा प्रतिपादयामि । ननु यथाकथञ्चिध

रिकिञ्चित्प्रतिपादने को दोष इत्याशङ्क्याह ॥ व्रजस्यापौरुषेयस्य वेदस्यानामय कच्चित् । दोषग धोऽप न सम्भाव्यते । पौरुषेय वाक्येषु तथा चेदस्तु नामति भावः । न वागता एव परब्रह्माणि वयमत. किमित्येव पृच्छसीत्याशङ्क्याह ॥ ब्रूतेति ॥ स्वागमनवतीना युष्माकमागनकारण विनाऽऽगमन नोचितमिति कृत्वा तस्य कारण जातिगुणसञ्ज्ञान्यतम ब्रूतसर्थ' ॥ १८ ॥

एवमुक्ता, लज्जाविष्टमानसाः किञ्चिदपि वक्तुमक्षमा अवलोक्य प्रेमोद्दीपनार्थमीषत्कर्णकठोर वाक्यमाह ॥

> रजन्येषा घोररूपा घोरसत्त्वनिषेविता ॥
> प्रतियात व्रज नेह स्थेयस्त्रीभि सुमध्यमाः ॥१९॥

रजन्येषेति ॥ युष्माक मौ येन कारणाभावो मया ज्ञात' अकारण चागमनमु मत्तचेष्टितसमम् । तस्माद् वृथाऽऽगमनवदत्रावस्थानस्यानुचितत्वादिह वने न स्थेयम । यज्जात तत्तु जातमिति माऽस्तु वृथा चेष्टितमिति भाव. । तर्हि किं चेष्टितमित्यपेक्षायामाह ॥ व्रज प्रति यात गच्छत। गत्वा गृहकृत्यपरता सम्पाद्येति भावः । व्रजमित्यनेनात्रागमनवद् यत्र गमनस्यापि निष्फलत्वं सूचितम् । ननु भवतु क्षणमात्र स्थित्वा गमिष्याम इतिचेत् तत्राह ॥ रजनीति ॥एषा उपलभ्यमाना । तथाच सम्यग् नेत्राण्युमील्य द्रष्टव्या, एषा रजनी वर्तते, न तु दिनम् । दिनादौ विलम्बेऽपि कृते उत्तरोत्तरप्रकाशबाहुल्यसम्भवान्नास्ति बाधा, रजन्यमुत्तरोत्तरा धकारबाहुल्यसम्भवाद्विलम्बो नोचित इति भावः किञ्च ज्योत्स्नाबहुलाऽपि घोररूपा रात्रित्वादेव । तथाच महानिशीथाऽऽगमे गमनमत्रावस्थान च दुर्घट भविष्यतीति भावः ननु भवत्वेव तथाप्यकस्मादागता' फलमूलादिक किञ्चिदादाय

प इति चेत् तत्राह ॥ घोरसत्त्वैर्व्याघ्रसर्पवृश्चिकादिभिर्नि-
। कालसम्बन्धाद् वृन्दावनेऽपि घोरसत्त्वसम्भावनयात्राव-
विहरण वा नोचितमिति भावः । न वेव तर्हि भवताऽपि
त्रावस्थीयते, व्रज एव चलनीयमितिचेत् तत्राह ॥ स्त्रीभि
तत्रापि हेतु ॥ सुमध्यमाः ॥ सुकुमारमध्यभागा भयोप
पलायनादावसमर्था । अत एव कोमलचित्तत्वाद् घोरस-
दृमप्यक्षमाः । एतेन तव सन्निधौ नास्त्यस्माक किञ्चिद्
ति शङ्कापि निरस्ता । अनभिज्ञापक्षे एतच्छ्रुत्वा, अहो द्र
र्तृाधिराजस्य वाग्विलासचातुर्यं, लोकोत्तरसौ दर्य्यक्रीडा-
दर्शयित्वा धैर्यधैकुललज्जादिक नाशयित्वा सम्प्राति कल
स्वयमाहूय कारण पृच्छतीत्यपाङ्गचालनैरेव परस्परमाच
तासु अहो मया बुद्ध, देवपूजोपयोगपुष्पाद्याहरणाय भव
गता स्युरतस्तथाचेच्छृणुतस्याह ॥ रज येषेति ॥ भो, चतुर
। किमेवमागमनकारण पृच्छसि । भवानिव वयमपि क्री
। समागता इति छद्मनाऽवस्थानपरा आलक्ष्याह ॥ रज
रूपेति ॥ भो विशालनेत्रा, नेद दिनम् । अत एवत्रि
जन्या कुलवधूना युष्माक प्रासाद एव क्रीडोचिता, न तु
स वने । ननु घोररूपाया रज या प्रासादेऽपि क्रीडा कथ
चेत् तत्राह ॥ इह, वने एव घोररूपा, न तु व्रजे। सहाय
दिति । ननु भोः कमलनयन ! एवविधज्योत्स्नावत्त्वेन
माना रजनी किमिति घोररूपेत्युच्यत त्वयतिचेत् तत्राह॥
निषेविता ॥ अतो व्रज प्रतियात । अहो भवतु, क्ष-
वेश्रम्य यास्याम इतिचेत् तत्राह ॥ नेति ॥ अवश्यकर्त
म्बो न युक्त इति भाव । ननु भवता कथ स्थीयते
तत्राह ॥ स्त्रीभिरिति ॥ ननु बह्वीनामस्माक तव सन्निधौ

। का भयसम्भावनेतिचेत् तत्राह॥सुमध्यमा इति ॥ यद्वा
व भीरुरसि, न तु वयम् । वनमपि साधारण, न तु त
तामहादिभिर्वा मौल्येन क्रीतम् । अतो वयमत्रैव विहरि
ते चेत् तत्राह ॥ नेति ॥ भवतु, यथेष्ट विहरन्तु भवत्य
ो मत्पार्श्वे न स्थेयम् । आबालब्रह्मचारिणा मया स्त्रीस
द्विनत्वात् । तत्रापि बालवृद्धाभि. सहावस्थाने नाहि
युय तु युवतयः सुन्दर्यश्चातो दूरतः परिहरणीय
ाह ॥ सुमध्यमा इति ॥ तथाच सुन्दरीणा युवतीना सु
मया रात्रौ निर्जने वने सहावस्थान नोचितम् । यद्यपि
पतिव्रता, अहं च ब्रह्मचार्य्यग्रगण्यो जितेन्द्रिय एवाऽत
ानेऽपि नास्ति विकारशङ्का, तथापि मनसोऽविश्वसनीय
र्दुर्बलत्वाच्च नेदमुचितमिति भावः । यद्वा। अत्रागमने भ
योजनमहं न पश्यामि । पृष्टेऽपि तूष्णीम्भावाद् भवत्यो
ाश्य ततो यद् ब्रवीमि तत् कुरुध्वमित्याशयेनाह॥ रजनी
त्पति व्रज प्रतियात । यत एषा, दिवा तत्तद्व्यापार
धावसरयोर्दम्पत्योः सुखजनकत्वेन बहुशोऽनुभूयमाना
वनकरी वर्तते । ननु यथैव तथापि रजन्यां न तुमशक्ता
तत्राह ॥ अघोररूपा ॥ शरत्पूर्णचन्द्रचन्द्रिकया व्याप्त
नसाहश्यमापन्ना । अतो नास्ति भयसम्भावनाऽपीत्यर्थः
। निर्जन वने व्याघ्रादयो यदि स्युस्तर्हि किं कुर्म इति
ाहाऽघोरसत्त्वैर्भ्रमरकोकिलादिभिरेव निषेविता, वृन्दा
व्याघ्र तु घोरसत्त्वैर्व्याघ्रादिभिरसत्त्वैर्थ । किञ्च पति
मित्र स्थितौ नास्ति क्षतिरित्याह ॥ नेति ॥ स्त्रीभिः पति
भिरिह निर्जने वने तत्रापि मत्पार्श्वे केवलानामत्र पर
ाधावस्थानस्य सुखहान्यपकीर्त्यादिकरत्वात् । मम स्त्रं

इतस्य पुरुषस्य यत्र कुत्रापि स्थितौ नास्ति काचित् क्ष-
पे, स्त्रीभिरित्यनेन ध्वनितम् । ननु एकस्या रजन्यां वि-
व स्थास्यामस्त्व कस्मादस्मान् दृष्ट्वा ग्लायस इति चेत्
। हे सुमध्यमा इति ॥
णान्तरे को वद किं भविष्यति, एवविध सौकुमार्य्यादिक
पणीयम् । ममापि भवतीना सौन्दर्यादेर्द्वेथा नाशसम्भाव-
॥ ग्लानिर्भवतीति भाव. । मानिनीपक्षे, अथैवमुक्ता व्रज
तुमुद्यता आलक्ष्याह ॥ रजनीति ॥ अहो आगमनकारण
ना नोच्यते चेत् तर्हि मा ब्रूत तथापि व्रज प्रति तु न
यत्रापि प्रार्थनाया लोट् । कुत इसत आह ॥एषाऽनुभूय
जनी रञ्जनकरी । एवविधा पुनर्मिलिष्यति न वेति भाव ।
ोत्स्नाव्याप्तत्वादघोररूपा । पुनश्च क्रीडोपकरणभूतैरघोरै-
ादिभिर्नितरां सेविता । यद्वा घोर सत्त्व बल यस्य तेन
वेविता । अतो नास्ति भयसम्भावनाऽपीति भावः । यद्वा
गमनभयाविष्टमानसा वय कथ न याम इतिचेत् तत्राह ॥
॥ रात्रित्वात् । पुनश्च घोरसत्त्वनिषेविता, तस्मादत्र
नायास्यतीति भाव । अतः सर्वशङ्का विहायेह मत्पार्श्वे
यतः, स्त्रीभि. । स्त्रीणा हि एवविधे देशे काले चैवविध-
नेधाववस्थान बहुयोग्यमिति भावः । तत्रापि न स्त्रीमात्रस्य
युष्मद्विधानामित्याशयेनाह ॥ हे सुमध्यमा इति ॥
वृत्तिपक्षे, ब्रूतागमनकारणमित्युपक्षिप्य कारणाभावमुपपा-
। रजनीति ॥ एषा अद्वैतवाद्यभिमता निर्विशेषा चित्,
ात्रितुल्या । सर्वस्यापि तत्राध्यासात् । अत एव घोर सर्व
निर्मुक्तत्वादसन्तशून्यारण्यवदसर्वभयङ्कर रूप यस्या
त एव घोरं स्वपरात्यन्तदुःखकर सत्त्व बलमन्तःकरण

वा येषा सर्वनिषेधप्रतिपादनपराणा तैर्नितरा मेविता । अतो ३
प्रति यात बहुवेदवाक्यानुसरण कुरुत । इह निर्विशेषचिति प्रा
पादकतया न स्थेय, स्त्रीस्थानापन्नाभि श्रुतिभि । यतो हे सु
ध्यमाः! शोभनार्थप्रतिपादनेन सुन्दर्य्यः । अय भाव । ब्रह्म।
वेदान्ता न प्रमाणम् । तत्र तत्प्रामाण्यस्याशक्यनिरूपणत्वात
तथाहि । ब्रह्म माना तरगम्य न भवति, किं वा भवति । नाद्य
मानान्तरविषयत्वयोग्य एव सिद्धे शब्दप्रवृत्तिदर्शनात । न ि
तीय । वेदा तप्रतिपाद्ये ब्रह्मणि माना तरानुपलब्धे । न
लोकेऽपि न वाक्यार्थे माना तरापेक्षा । वाक्याथस्य सर्वत्रापू
त्वात । सिद्धबोधि वाक्यमपि न स्वार्थप्रमितौ तदभावशङ्कानि
वृत्तये वा माना तरमपेक्षते, किं तु वाक्यस्य वक्तृदोषप्रवृत्ताप्राम
ण्यशङ्कानिवृत्तये ब्रह्म त्वऽपौरुषेयवेदा तलक्ष्यमखण्डसद्वाक्या
एवातस्तल्लक्षकवेदा ताना न माना तरापेक्षा । अत कथ ब्रह्म
वेदा तानामप्रामाण्यमितिचेन्न । अखण्डार्थत्वस्य लोकवेदयोर
द्धत्वात । न हि नानापदार्थससर्गविषयस्य वाक्यस्यैकप्रातिपा
कार्थविषयत्व सम्भवति । वाक्य हि अभिधा, गौणी, लक्षणा
वृत्तिमादाय स्वाथ बोधयतीति प्रसिद्धम् । नचास्व यतमया
वृत्त्या वेदा ता अखण्डमथ बोधयन्ति । मुख्यवृत्त्या पदाना
कार्थवृत्तित्वानुपपत्ते' स्पष्टत्वात । गौणीलक्षणयोः स्वीका
ऽप्यन्यतरपदवाच्यार्थाल्लक्ष्याद्वा अधिकयोर्लक्ष्यमाणगुणा यत
पदवाच्यार्थयो सत्त्वाद्वाक्यार्थस्यैकपदार्थमात्रवृत्तित्वासिद्धि
ननु पदद्वयेऽपि लक्षणाङ्गीकाराल्लक्षणापक्षे नास्ति दोष इति चेन्न
अर्थभेदाभावे पदाना पर्यायत्वादाकाङ्क्षादेरभावाद्वाक्यत्वभङ्गापत्तेः
वाक्यवैयर्थ्यापत्तेश्च । ननु वाच्यार्थभेदान्न पर्यायता । वाक्यस
पदानतिरिक्तत्वेऽपि प्रमितिजनकत्वेनार्थवत्त्वात् । नापि वाक

मिति चेन्न । वेदान्तानामनुदितानस्तमितचैतन्यमात्रस्वरूप
वषयप्रमितिजनकत्वाङ्गीकारेऽविपर्यसिद्धा तभङ्गापत्तेः । प्र
स्याच्च । तस्मान्न श्रुतिमस्तकप्रतिपाद्यत्वविवाद इति॥२९॥
नवत्पाक्षीच्छया समागताना भवद्गीतादिनोद्दीपितस्मराणा
हनाक्षमाणा स्वभक्तानामस्माक त्यागो नोचित  इति
ाह ॥

रः पितर  पुत्रा भ्रातर  पतयश्च व  ॥
न्वन्ति ह्यपश्यन्तो मा कृध्व बन्धुसाध्वसम् ॥ २० ॥

इति ॥ कासाञ्चि मातरः, कासाञ्चित् पितरः, कासाञ्चित्
ासाञ्चिद् भ्रातर., कासाञ्चित् पतय. सर्वे गृहे अपश्यन्तो
ित मृगयन्ते, न त्व वेषणान्निवृत्ता अतो मात्रादिष्वेकोऽपि
मत्पार्श्वे युष्मान् पश्येत् तदोभयेषा भयलज्जे स्यातामतो-
सा व धुभ्यः स्वस्य भय, बन्धूनां मम चाऽपकीर्तिभय च
ाऽतो व धूना साध्वसपरिहाराय व्रजं प्रति यात, अन्यत्र
स्त । तथाच सभसस्ति भवतीनां प्रतिबन्धकमतो मम
। इति भावः ।

ापक्षे, ननु नास्त्यस्माक किञ्चिदपि भय समुदायनिविष्टत्वा
मीपस्थत्वाच्च । नाप्यपकीर्तिभयम् । सघश आगतत्वाद
ाने स्थितत्वाच्चेति चेत् तत्राह ॥ मातर इति ॥ भवतीना
का युष्मान् गृहेष्वदृष्ट्वा  विचि वन्ति । अतस्तासा साध्वस
म् । ननु ता अप्येवविधा एवात. स्त्रीत्वाद्वा नागमिष्य ती-
ात्राह ॥ पितर इति ॥ ते स्वकुले कलङ्कपातशङ्कया विचि-
ागमिष्यन्तीत्यर्थ । ननु ते ऽपि नागमिष्यन्ति, सघश आ-
मासु शङ्कानुत्थानात् । स्त्रीस्वभावस्य तैरपि ज्ञातत्वाच्चेति-
ाह । पुत्रा इति । पुत्राणा  रक्षणाग्रहे महती लज्जा वर्तते

इति भावः । ननु ते बाला इति चेत् तत्राह ॥ भ्रातर इति ।
अन्वेषणे समर्था लज्जावतश्चातस्ते अदृष्ट्वा लज्जया कदाचिच्छ
रीरमपि त्यजेयुरिति भावः । ननु तरुणास्ते वयं च तरुण्यो
लज्जया वेषणार्थं नागमिष्यतीति चेत् तत्राह ॥ पतय इति ॥
यद्वा, ननु रात्रौ पतिसन्निधौ स्थितिसम्भवानया तेऽ वेषणाय न
यतेन्त इति चेत् तत्राह ॥ पतय इति ॥ ते रात्रौ भोगापेक्षा भव
तोऽदृष्ट्वा अ वेषय तोऽत्रागमिष्यन्ति । तस्मात् तदीयो रसोऽ
स्मै न देयः । भोगसिद्धेस्तत एव सुकरत्वादिति भावः । न
तर्हि ते यदा आगमिष्यन्ति तदा तैः सार्द्धमेव गमिष्यामोऽतस्त
त् त्वमस्मत्समीपे तिष्ठेति शङ्कानिरासाय, विचिन्वन्तीत्युक्त
तथा च गृहान्निर्गता मध्ये स्फुटितैर्मार्गान्तरैर्गताः सन्तो विचि
न्वन्तोऽत्रागमनं तेषां दुर्घटमतो विचिन्वन्तोऽतिखेदं मरणं वा
प्नुयुरित्यर्थः । न वस्तु, किमस्माकं तैरिति चेत् तत्राह ॥ मेति ॥
सार्द्धमेवावस्थानयोग्यानां कुलाङ्गनानां युष्माकं तत्साध्वसोत्पा
का प्रवृत्तिर्नोचितेति भाव ॥ मानिनीपक्षे, ननु किमित्येव नि
र्लज्ज सन् बहुपरिवाररक्षिता लज्जावतीरस्मान् प्रति ब्रवीषि, व
मत्र क्षणमात्रमप्यवस्थातुं न शक्नुमः । यतः परमप्रेमास्पदा
स्मानऽपश्य तोऽस्म मात्रादयोऽ वेषणाय निःसृताः स्युरतस्तेषा
ध्ये यद्येकोऽप्यत्रागत्य वाऽस्मान् पश्येत् तर्हि महाननर्थो भवेत् तस्
त् तदागमनात् पूर्वमेव झटित्येवास्माभिर्गन्तव्यमिति चेत् त
ह ॥ मातर इति ॥ व धुभ्यः साध्वसं मा कुध्वम् । यतस्ते मात्र
याऽपश्यन्त सन्तो विचिन्वन्त्येव, न तु गहनेऽस्मिन् वने ते
मागमनं सम्भाव्यत इति भावः । यद्वा, विचिन्वन्ति, न त्वत्रायां
नाप्यायास्यन्ति । हि यतोऽपश्य तो न द्रक्ष्यन्त्येव वनस्यास्या
निबिडत्वा यथा तामस्या विद्यया एतत्स्थानस्याच्छादितत्वाच्

य विहाय मया सार्द्धं यथेष्टं रमतेति भावः ॥
हत्तिपक्षे, ननु निर्विशेषमखण्डं ब्रह्म यथोक्तरात्रिकल्पमि
कथं ज्ञातमित्याशङ्क्य बहुविद्वत्सम्प्रतिपत्तेरित्याह ॥ मातर
ये मात्रादिस्थानापन्नाः सांख्याध्वरमीमांसकादयो विचि
यथोक्तं ब्रह्म श्रुतिप्रमाणकमस्ति ? न वेति ? विचारय
पि न पश्यन्त्येव । तथा च यदि स्यात् तर्हि परमविच
ष्यमाणमवश्यमुपलभ्येत, नोपलभ्यते । स्फीतालोकवर्ति
लभ्या घटाभाववत् तदभावो निश्चीयत इति भावः । त
थोक्तरात्रिकल्पत्वत्राणाय परमोद्योगवत्त्वादेते वो बन्धव
ध्वस तन्मताननुमोदनेन वेदबाह्यत्वमाप्तिभयं मा कुध्व
क्षकस्य रक्षणमेवोचितं, न तु भयप्रदानमिति भावः ॥२०॥
मुक्ता अहो भगवदनुग्रहालाभान्निष्फलमेवास्माकमागमनं
। विचार्य्य खिन्नचित्ता आश्वासयति ।

वनं कुसुमितं राकेशकररञ्जितम् ॥
ाऽनिललीलैजत्तरुपल्लवशोभितम् ॥ २१ ॥

ते ॥ युष्माभिरत्रागत्य वनं दृष्टमेव । न वेवं चेत् तर्हि कल-
मर्थमत्र वयमाहूता इत्याशङ्कापि परिहृता । वनं द्रष्टुमत्
रितमहो इदं वनं स्वभक्ताभ्योऽपि प्रदर्शनीयमित्याशयेन
न मयाऽऽहूता इति भावः । ननु का वाऽत्र दर्शनीयतेति
ाह ॥ कुसुमितमिति ॥ ननु कुसुमितवनमेव यद्यस्माक
व्य तवाभीप्सितं स्थितं तदा दिने एव वयं कुतो ना
इतिचेत् तत्राह ॥ राकेशः पूर्णचन्द्रस्तस्य करैः किरणै
: । तथाच दिने रात्र्यन्तरे वा नास्त्येवंविधा शोभेति
किञ्च, वायुरप्येवंविधः समयान्तरदुर्लभ इत्याशयेनाह ॥

यमुनास्पर्शिनोऽनिलस्य वायोर्लीला मन्दगतिस्तया राजन्तः कम्
मानास्तरूणा पल्लवास्तैः शोभितम् । तस्मान्नास्त्यागमनवैय्यर्थ्
मिति भावः ॥ अनभिज्ञापक्षे, ननु भवतु, तव निकटे न स्थीयते
अ यमदेशे गत्वा स्थास्याम इत्यभिप्रायवतीरालक्ष्याह ॥ दृ
मिति ॥ एवंविधप्रदेशान्तरं नास्ति । अयं च प्रदेशा दृ
एव भवतीभिरतोऽलं वृथा कालक्षेपेणेति भावः । यद्वा, किं
च मात्रादिबन्धुभय प्रदर्श्यते, तद् त्वऽस्माकं दत्तजलाञ्जलि
प्रायमेवान्यथा तान् परित्यज्य रात्रौ बहिरागमनं कथं भवेत्
त्वं बिभेषि चेद् त्वमेवेतो गच्छेति प्रणयकोपवतीरालक्ष्याह ॥ दृ
म् ॥ अहो मयापि ज्ञायते, निर्दोषाणां नास्ति कुतो भयम् । त
थापि बुद्धिमतीनां वृथा गृहान्निःसरणस्यायुक्तत्वाद्वनशोभेक्षण
र्थमागता स्युस्तच्च सम्पन्नमितो वृथाऽत्र न स्थेयमिति भाव
यद्वा, तच्छ्रुत्वा लज्जयेतस्ततो विलोकयन्तीरवलोक्याह ॥ दृ
मिति ॥ अहो ज्ञातं मया, साध्वीनां भवतीनां गृहान्निर्गमनं वन
क्षणाय, तच्च जातमतो गन्तव्यमिति भावः । ननु प्रसङ्गादत्राग
ताः फलानि गृहीत्वा यास्याम इतिचेत् तत्राह ॥ कुसुमितम्
न तु फलितम् । एतच्छ्रुत्वोर्द्ध्वदृष्टीरालोक्याह॥राकेशकररञ्जि
तम् ॥ अत, शरत्पूर्णचन्द्रचन्द्रिकाशोभेक्षणाय भवत्य समागत
स्युस्तदपि जातमिति भावः । यमुनाभिमुखीरालोक्याह ॥ यमुने
ति॥मानिनीपक्षे, ननु तथापि गृहाद्बहिरस्माकं मनो न रमतेऽ
कथमत्र तिष्ठाम इतिचेत् तत्राह ॥ दृष्टमिति ॥ कुसुमितमिदं व
भवतीभिर्दृष्टम् । तथाच नास्ति गृहेष्वेवंविधकुसुमशोभाऽतोऽत्र व
स्य मनो न रमते। प्रत्यक्षोपलब्धस्यापलापो न युक्त इति भाव
किञ्चैवंविध राकेशकररञ्जन यमुनानिललीलैजत्तरुपल्लवशोभा
गृहेषु क्वास्ति । तस्मादेतत् सर्वमवलोक्यैव प्रेयस्यो भवत्यो मर

। स्मृत्वा कलगीतेनाहूता भवत्योऽप्यागत्य तथैव दृष्टवत्यो-
ानाग्रह विहायेह स्थेयम् । गोष्ठ प्रति मा यातेति परेणा
॥

वृत्तिपक्षे, ननु भवन्तो विवेकच द्रानुदयाद्वैराग्यादिरहिता
भेप्राय न जानन्ति । विवेकादिसाधनसम्पन्ना त करणास्तु
त्याशङ्क्याह ॥ दृष्टमिति ॥ राकेशस्य विवेकच द्रस्य करै-
दै रञ्जित शान्त्यादिलक्षणकुसुमशोभितम त.करणलक्षण
मित्युपहासः । नाममात्रे श्रुत्यर्थाभासा ये विवेकादिमन्त
ः । यतो यमुनास्थानीयाऽविद्यासम्बन्धिनोऽनिलस्य
ायस्य विक्षेपस्य लीलया तत्तद्विषयलालसया एजन्तस्तरु-
ास्य वैराग्यस्य पल्लवास्तत्स्थानीया अविचारोत्था वैरा-
ः शोभितम् । यद्वा, यथोक्तयमुनानिललीलया विलासेन
ल त प्रवेपिता. ससारवृक्षस्य पल्लवा विषयप्रवालास्त
( । तथाच श्रुतवेदान्तानामपि यथापूर्वससारोपलम्भे तेषा
ाभासमवलोक्य त मतानुसरण नोचितमिति भाव ॥२१॥
ो नाद्यापि भगवतस्तोषोऽस्मासु जातो वर्ततेऽतस्तदर्थ क
ुतिष्ठाम इति चिन्तयन्तीर्व्याकुलचित्ता अवलोक्य, वर्णा
्वता पुरुषेण पर पुमान् * विष्णुराराध्यते प था ना
वकारणमित्युक्तत्वात् स्वधर्माचरणमेव मम तोषोपायोऽत-
पास उचित इत्याशयेनाह ॥

यात मा चिर गोष्ठ शुश्रूषध्व पतीन् सती ॥
न्ति वत्सा बालाश्च तान् पाययत दुह्यत ॥२२॥

यातेति॥ यस्मादत्रावस्थान निष्फल, तत्र गमन च स्व
ेन मम तोषकरत्वात् सफल तत् तस्माद् गोष्ठ यात ।

तत्रापि, मा चिर शुभकार्ये विलम्बो नोचित इति भावः । र
गत्वा पतीन् सेवध्वम् । यतो, हे सत्यः ! पतिव्रतानां युष्माकमिद
वानुष्ठेयमिति भावः । यद्वा, सती' पतिव्रताः श्वश्र्वाद्या. स्त्रीः से
ध्वम् । ससर्गजा गुणदोषा भव तीति यायाद् गुणवतीना सेवं
भवत्योऽपि तथाविधा भविष्यन्तीति भावः । ननु स्वधर्माचरण
भवच्चरणाभिमुख्यमेव फल, तस्य जातत्वात् ततो निवृत्तिरेवाधु
श्रेयसी । आरुरुक्षोर्मुनेर्योग कर्म कारणमुच्यते * योगारूढ
तस्यैव शमः कारणमुच्यत* इत्यादिशास्त्रादतस्त्वदाभिमुख्यमस
मानास्ते कथ सेवनीया । ततस्तादृश पातिव्रत्य त्वदङ्घ्रिपाथोरु
योर्नीराजनीकृत्य दूरतस्त्यक्तमस्माभिरित्याशङ्क्य, दयया सर्वे
तेष्विति*दयाया मदाराधनाङ्गत्वात् सा त्वयश्यमपेक्षितेत्याशयेन
ऽऽह ॥ क्रन्दन्तीति ॥ अतस्तान् गत्वा दुग्ध पाययत, तदर्थ ग
दुह्यत ॥ अनभिज्ञापक्षे, एवव्याजेनोद्दीपयित्वा निषेधेनात्यासक्ति
त्पादयति ॥ तदिति ॥ हि यद् यस्मादत्रावस्थाने फल किं
दपि नास्ति तत् तस्माद् गोष्ठ यात । तत्रापि मा चिर, य
पतिशुश्रूषासमयो वर्तते इत्याशयेनाह ॥ शुश्रूषध्व पतीन् ॥ यतो
सत्य., अत' क्षणमात्रमपि परपुरुषस्य मम पार्श्वेऽवस्थान प
व्रताना युष्माकं नोचितमिति भाव । यद्वा, कथ भूतान् पती
सती.।एते युष्मत्पतयः पूर्वज मनि पतिव्रताः स्त्रिय' स्थिता. पुरु
भावनया पुरुषत्व प्राप्ता, भवत्यस्तु पूर्व पुरुषाः स्थिता' स्त्रीषु
सक्तचित्तत्वात् स्त्रीत्व प्राप्ता, अतः पुनर्वैपरीत्यार्थ पतीन् शुश्रू
ध्वमित्याशय' । किञ्च, करुणाऽपि स्त्रीणा स्वाभाविकी भवति
अतः करुणावतीना युष्माक बाला वत्साश्च क्रन्दन्तीत्यतो ग
तान् पाययत, दुह्यत ॥ मानिनीपक्षे यद् यस्माद् बन्धुभय नास्ति
वनशोभादिरूपा रमणसामग्री चैतादृशी तत. शीघ्र मा यात, कि

नन्तर रा ज्य ते यास्यथेत्यर्थ । ननु पतिशुश्रूषणादिबहु
योर्वैरितत्वान्नास्त्यस्माक चिरतरकालमवस्थानाऽवकाश
तत्राह ॥ पतीन् मा शुश्रूषध्वम् । सती श्वश्रूप्रमुखा मा
म् । सतीपदवी वा मा सेवध्वम् । नन्वस्माक बाला
क्र दन्सत. कथमत्र स्थैर्यमित्याशङ्क्य क्षण नेत्रे निमील्य
यात्राऽऽह ॥ वत्सा बालाश्च मा क्रन्दन्ति ॥ अहमत्र
व सिद्धकलया जानामि—ते सुखेन वर्त न्ते, न त्वाक्रोशन्ति
पायरत । दासादिभि पायितत्वात् तु, मा दुह्यत । तैरेव
पि कृतत्वादित्यर्थ' ॥

वृत्तिपक्षे, यस्मान्निर्विशेषब्रह्मप्रतिपादन न, तत् तस्मादाशु
यार्थकश्रुतिसमुदाय यात, स्वसमुदायनिविष्टा भवत, क्रि
तिपादयत । तदुक्तम्—आम्नायस्य क्रियार्थत्वादानर्थ-
र्थानामिति । ब्रह्मणः परिनिष्ठितरूपत्वात् परिनिष्ठिते
च प्रत्यक्षादीनामपि प्रवृत्तिसम्भवात् तैरसवाद प्रामा-
र्लभत्वात् सार्थक्याय क्रियामेव प्रतिपादयतेत्याशयः ।
पेयवाक्यानि प्रामाणा तरापेक्षत्वात् सवादविसवादाभ्या
प्रमामाण्य वा लभ ते । अपौरुषेयाणा वेदवाक्याना तु
तरानधिगम्यविषयतया चक्षुरादिवदनपेक्षमेव प्रामाण्य-
त् । सत्यम् । तथापि अनपेक्षाप्रामाण्ययोरपि चक्षु'स्पर्शन
सवादाद् यथाऽन्यतरस्याप्रामाण्य तथा ब्रह्मैकत्वश्रुतीना-
स्य इत्यादिप्रत्यक्षस्य च परस्परव्याघाताच्छब्दस्याप्रामा-
स्मात् तत्रैव स्थित्वा पतीनि द्रचन्द्रादिरूपान्, तत्कर्मप्रति-
शुश्रूषध्वम् । यतो, हे सत्य. ! स्वाध्यायविध्युपात्तत्वाद्-
शङ्काकलङ्काऽयोग्याः । किञ्च, सर्वमिथ्यात्वसिद्धान्तमा-
सबालस्थानीयकर्माधिकारिण. सर्वेऽपि क्रन्दन्ति, अत

स्तान् पाययत दुह्यत । तत्कर्मफल सत्यमिति मातपादनेन त
न्तोष सम्पादयतेत्यर्थ ॥ २२ ॥

एतच्छ्रुत्वाऽसन्तखि नचित्ता आलक्ष्य, अथवा नास्ति भव
ना वनशोभेक्षणेच्छा, नापि मदपेक्षयाधिक पुत्रादौ स्नेहोऽ
मदर्थमत्र समागता इत्याह ॥

अथवा मदभिस्नेहाद् भवन्त्यो यन्त्रिताशया ॥
आगता ह्युपपन्न तत् प्रीयन्ते मपि जन्तव ॥ २३ ।

अथवेति ॥ मयि यः स्नेहस्तेन यन्त्रिताशया वशीकृतचित्त
सत्यो, मद्दर्शनार्थ यूयमागता इति स्यात् । तदेतदुपपन्नमुपपा
युक्तम् । न त्वयुक्तः पक्षः । हि यतः सर्वेऽपि जन्तवो म
प्रीता भवन्ति । यद्वा उपपन्न सिद्धम् । यतो मयि दृष्टे जन्त
प्रीयन्ते अतो भवत्यो मद्दर्शनेन प्रसन्नाः सत्यो गच्छतेति भावः
अनभिज्ञापक्षे, एव श्रुत्वा सरम्भक्षुभितदृष्टीरालक्ष्य ततोऽप्यधि
कक्षोभमुत्पादयति ॥ अथवा, वनादिक द्रष्टु नागताः, ते प
इत्थैव मया कल्पिताः । भवत्यस्तु मायया योजितः स्नेहः स्वाभ
विकी प्रीतिर्न तु कामाद्युपाधिका, तेन यन्त्रिताशया आगतास्त
दुपपन्नम् । अयमेव पक्ष उपपन्नः । हि यतः सर्वे प्राणिनो म
प्रीयन्ते । तथाच सामा यप्रीत्यतिशयवत्यो मद्दर्शनार्थमागताः
तस्यापि जातत्वाद् गन्तव्यमिति भाव । अथवा, यतो मयि ए
न्तव प्रीयन्ते अतो मत्स्नेहाद् भवत्योऽपि यन्त्रिताशयास्तदेतदु
पन्नम् । यत आगता ॥ मानिनीपक्षे, पूर्व यद्यपि प्रयोजनान्तरा
मागता भवत्यस्तथापि मन्मनोरथपूर्त्यर्थमत्र तिष्ठतेत्युक्तमिदा
भवतीना मयि स्नेहातिशयो वर्तते इति चिरकालान्मया बुद्ध्यते।त
किमर्थ तत्तिरोधान क्रियत इत्याशयेनाह ॥ अथवा मदभिस्नेहा

यन्त्रिताशया यत आगताः । भवन्तस्तु योग्या एव । म
र्वेऽपि ज तवः प्रीयन्तेऽतो मत्स्नेहाकृष्टचेतसामत्रागमन
: । बहुयोग्यं जातम् । अतोऽत्र स्थित्वा तत्फल सम्पाद्य
ावः ।

द्वत्तिपक्षे पूर्वं श्रुतीना समस्ताना क्रियापरत्वमुक्तम्।तत्र ब्रह्म-
कश्रुतीना क्रियापरत्वासभवादानर्थक्य, हुफडादिवज्जपमा-
ात्र वाऽस्त्विति सूचितम्। इदानीमध्ययनविध्युपात्ताना वे
मानर्थक्यायोग, प्रतीयमानार्थस्य प्रत्याख्यानासम्भव चा
ऽस्तु वा कर्मापेक्षितकर्तृस्वरूपदेवतादिप्रकाशनेन क्रिया
त्वमुपनिषदामिति पक्षान्तरमाह ॥ अथवा मयि अस्म-
ाचर आत्मनि अभिस्नेहात् प्रतिपादनपरत्वाद्, यन्त्रिता
ानर्थक्य जपोपयोगित्व वा गमयितुमशक्यास्तर्हि, उपपन्न
ाम्बद्ध कर्तृदेवतादिरूपमात्मानमागतास्तत्स्वरूपप्रकाशने
। एव रीत्या प्रतिपाद्यमाने मयि आत्मनि सति जन्तव
लोकाः प्रसन्ना भव तीत्यर्थः ॥ २३ ॥
ापि भवन्तो मयि स्नेहातिशयवन्तो मद्दर्शनार्थमत्रागता
ानामि, तथापि श्रुतिस्मृतिबोधितस्वधर्मत्यागोऽयमनिष्ट इ-
ाह ।

शुश्रूषण स्त्रीणा परो धर्मो ह्यमायया ॥
ान्धूना च कल्याण्य प्रजाना चानुपोषणम् ॥२४॥

ुरिति ॥ भर्तुः शुश्रूषण स्त्रीणा पर उत्कृष्टो धर्मः । स्त्री-
विशेषणेन, एतावानेव लोकेऽस्मिन् पुसा धर्मः पर' स्मृ-
भक्तियोगो भगवति तन्नामग्रहणादिभिरित्यादिशास्त्रात्

पुरुषाणां साक्षा मद्भजनमभिहितम् । स्त्रीणां तु स्वप
ममाराधनमुक्तम् । नैव यज्ञक्रिया काचिन्न श्राद्धं नोपवा
या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्युतेत्यादिशास्त्रात् ।
ऽमायया कपटराहित्येन । तस्य च धूना स्वश्वश्रूवादीनां च
प्रजानां पुत्रादीनां चानुपोषणं स्तनादिदानेन पित्रादिभि
माणानां तदनु स्वेन पोषणमिति वा । हिशब्दो यथोक्तधर्मस्
वेदप्रसिद्धिं द्योतयति । श्रुतिस्मृती ममैवाज्ञे तदुल्लङ्घ्य
आज्ञाभङ्गी मम द्वेषी मद्भक्तोऽपि न वैष्णव * इत्यादिशास्
धर्माविरोधेन मे सेवामार्गं कल्याणकर इति सम्बोधन
अनभिज्ञापक्षे, ननु मत्स्नेहाकृष्टमानसा मदर्थमागता इति
नासि तर्हि प्रतियात व्रज, तद् यातेति किमिति निष्ठुर
न हि परमस्निग्धानामिय रीतिरित्याशङ्क्य, पापान्निवार
जयते हिताय * इति मित्रलक्षणस्याभिहितत्वाल्लोकद्वय
मिदं मदीयं वाक्यमतिकोमलमित्याशयेनाह ॥ भर्तुरिति ।
त्वयि स्निग्धत्वात् त्वच्छुश्रूषणमधुना कर्तुं प्रवृत्ता अतो
ऽपि तदनुमोदनं कर्तव्यमिति शङ्कापि निरस्ता । यथायोग्य
शुश्रूषणस्य च युक्तत्वात् । तथाच भर्तरि कर्तव्यं स्नेहादि
न कार्यमतो मय्यपि यथा ज तव, प्रीय ते तथा प्रीतिः
भाव । भवतीनां सर्वेऽपि स तीति सम्बोधनाशय' ॥ मा
नयात्राऽधर्म, शक्यो, ममैव युष्मद्भर्तृत्वे मत्सेवनस्य पर
दित्याशयेनाह ॥ अमायया भर्तुर्बाल्यभावादारभ्य निष्
भर्तृत्वेन वृतस्य मम शुश्रूषणं परो धर्मो, न तु बन्धुभिर्व
णापादितस्य । भीष्मेणाऽम्बाया, परित्यागेन बलापादितस
भर्तृत्वासिद्धिज्ञापनायैतत् । तस्मात् कपटागतभर्तृतद्ब न्ध्वादि
विहाय, मम मद्ब न्ध्वादिसेवनादिकमेव भवतीनां धर्मतोऽ

यकमित्यर्थः । एवं कृते नास्ति कदाप्यकल्याणमिति स
ायः ॥

वृत्तिपक्षे, तस्माद् भर्तृस्थानीयस्य प्रतिपाद्यार्थस्य सेवन
ाव स्त्रीस्थानापन्नाना श्रुतीनां धर्मं शक्त्यादिलक्षणः ।
र्येणान्यपरत्वेऽपि स्वार्थपरता न हीयते इति चेव तत्रा-
ायेति ॥ यत्परः शब्दः स शब्दार्थ इति यायात् । त
र्व्याजेन स्वार्थपरत्वं परमो धर्मः । उभयपरत्वे वाक्यभे
त्वमावश्यकम् । सम्भवति स्वार्थपरत्वेऽन्यपरता न न्याय्या
ावः । क्वचिच्छक्यार्थासम्भवे, तदूध्वना शक्यार्थसम्ब-
ावा प्रतिपादनमपि धर्मः । प्रजानां तत्स्थानीयानां मता-
द्रावितकैः, पुष्टानामनुपोषण, तत्रैव प्रमाणतयोपस्थिततत-
तिपुष्टत्वसम्पादनं च । यतो हे कल्याण्यः सर्वकल्याण
ानिवृत्तिबोधनपरशास्त्ररूपाः । अन्यथा शास्त्रपदप्रतिपाद्य
वतीनां न स्यात् । प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन
ासा येनोपदिश्येत तच्छास्त्रमभिधीयते * इति शास्त्रलक्ष-
त् ॥ २४ ॥

। पतिरेव स्त्रियः परमं दैवतं, तदाराधनं च परमो धर्मः,
लोकद्वयविजय इति लोके शास्त्रे च घण्टाघोषस्तस्माद्
वाद्यनेकदोषयुक्तोऽपि न त्याज्यः । किमुत दोषविनिर्मुक्त
नाह ।

ालो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा ।
स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी ॥२५॥

शील इति ॥ दुष्टं शीलं द्यूतादिव्यसनं यस्य सः । दुर्भगो
यः । वृद्धो जराजर्जरीभूताङ्गः । जडो मूर्खः । रोगी म-

तुः । अधनः स्वोदरपूरणेऽप्यसमर्थः । एवमुक्तदोषेष्वेवं
न, किं वा सकलदोषयुक्तोऽपि पतिर्लोकद्वयविजयेच्छ
स्त्रीभिर्न हातव्यो नैव त्याज्यः। पातकी तु यावत् पात
व्यः । पतिं त्वपतितं भजेत् * आशुद्धेः सम्प्रतीक्ष
तकदूषितं * इत्यादिवचनात् । अनभिज्ञापक्षे, ननु अ
तयो नास्मदनुकूला अनुरूपाश्चातस्त्यक्ता एवातः किं र
देशेनेति चेत् तत्राह ॥ दुःशील इति ॥ षड्विधैश्वर्ययु
रपुरुषमवलोक्य षड्विधदोषयुक्तोऽपि स्वपतिर्न हार
जवासी तु सर्वसद्गुणयुतो निष्पापश्चातः कथं त्याज्य
शयः । मानिनीपक्षे— तस्माद् बलात्कारेणाहृतयाऽप्य
स्वमनसा हृतः पतिर्न त्यक्तो, यथा च सावित्र्या पितुर्वा
सवान्न त्यक्तस्तथान्याभिर्युष्मदादिभिः स्त्रीभिर्मनसा हृ
तव्यः । तत्रापि षड्विधैश्वर्यसम्पन्नोऽहं, न तु दुःशील
कः। वस्तुतः सर्वदोषयुक्तोऽपि न त्याज्यः। पतिरित्येकवच
भिरिति बहुवचनात् स्वस्यैव सर्वासां पतित्वं दृढीकृ
ाच तेषां वस्तुतः पतित्वाभावान्न तत्त्यागे कश्चिद्दोष इ

ाक्ति पक्षे तत्र दृष्टान्तमाह ॥ दुःशील इति ॥ वाशब्द
ाच यथा पतिसम्पृक्तत्वं पतिव्रतायाः स्त्रियास्तथा वाचो
र्थसम्पृक्तत्वमिति भावः ॥ २९ ॥
: परमेश्वरं आसक्तचेतसामस्माकं नास्ति जारपरमनसा
त्यागादिकृतो दोष इत्याशङ्क्य मोक्षार्थं तथा चेदस्तु तथ
ां तु मय्यप्यासक्तानां स्वपतित्यागे दोष एवेत्याशयेनाह

र्ग्यमयशस्यं च फल्गु कृच्छ्रं भयावहम् ॥

ऽसत च सर्वत्र ह्यौपपत्य कुलस्त्रिय ॥ २६ ॥

स्वर्ग्यमिति ॥ कुलस्त्रियः सर्वत्र सर्वस्मिन्नपि पुरुषे औप-
स्वर्ग्यं परलोकनाशकम् । अयशस्यमेतल्लोकनाशकम् ।
फल्गु अतिक्षुद्रम् । तथाभूतमपि कृच्छ्रं महाप्रयाससाध्यम् ।
सम्भोगकालेऽपि भयजनकम् । पुन साधुकर्मणि प्रवृत्ता-
प्सित निन्दितम् । चकाराभ्या नरकपातजातिबहिष्का-
दः । तस्मा मदाराधने यदि युष्माकमाग्रहस्तर्हि भगवद्बु-
नुष्ठेय, न तूपपतिबुद्धयेति भावः । अनभिज्ञापक्षे, विपक्षे
॥ अस्वर्ग्यम् ॥ ननु नास्माक स्वर्गापेक्षेति चेत् तत्राह ॥
म् ॥ ननु तदपि नापेक्षित, यद्वा रहसि नास्ति तत्राश
तत्राह ॥ फल्गु ॥ क्षणिकत्वात् । ननु मिथ्या ब्रवीषि,
इ तस्यानन्तसुखजनकत्वनिश्चयादिति चेत् तत्राह ॥ कृ-
पसादिवारणाद् दुःसाध्यम् । ननु निर्जनवने निवारक-
नास्ति दु साध्यम्, अस्तु वा, तथापि, वामता दुर्लभत्व
ं या च निवारणात् ॥ तदेव पञ्चबाणस्य मन्ये परममायु-
देवचनाद् दुःसाध्यता प्रत्युतासक्त्यतिशयहेतुरितिचेत् त-
भयावहम् ॥ लोकशास्त्रनिषिद्धत्वाद् यमराजादिदण्डजनि-
यकम् । ननु त्वदधरसुधालोभात् सर्वमपि भयमस्माभि-
। यद्वा, यत्र निषेधविशेषो दुर्लभत्व च य मृगाक्षीणाम् ॥
गरीणा निर्भरमासज्जते हृदयामति रसशास्त्रोक्तेर्भयमपि
साधायकमेवेति चेत् तत्राह ॥ सर्वत्र स्वपरदेशयोर्व्यवहार-
योश्च निन्दित तत्रौपपत्य सौख्यम् । ननु स्वाभीष्टसिद्धौ
स्माभि सह्यत इति चेत् तत्राह ॥ कुलस्त्रियः ॥ कुलस्त्री-
ः वक्तव्यमिति भावः । अनेन यद्यप्यासक्तचित्तत्वाद्भव-

तीभिः किमपि न गण्यते, तथाऽप्युत्तमवंशोद्भवेन मया कुलस्त्रि
नैव कलङ्कनीया इत्यपि ध्वनितम् । हे कुलस्त्रिय इति सम्बोध
वा ॥ मानिनीपक्षे, पूर्वोक्तरीत्याहमेव मुख्यः पतिस्त एवोपपत
इति तत्सङ्गमसुखमेवाऽस्वर्ग्यादिरूपम् । यद्वोत्प्रेक्षितानि स्मृ
वाक्यानि । अस्माभिस्तु भर्तृसेवादिः परो महानधर्म इत्युच्यते
स्वस्मिन्नासक्तचित्तस्य प्रेष्टस्य दुःखजनकत्वात् । तथा अपा
क्यपि दुःशीलत्वादिदोषविशिष्टः किं न हातव्योऽपि तु हात
एव । स्वस्य दुःखजनकत्वात् । तथाचैवंविधपत्युः सामीप्यमस्
र्ग्यादिदोषयुक्तमेवेति नमव्यञ्जनपरत्वेन श्लोकत्रयं व्याख्येयम् ।

यद्वा मदासक्तचित्तत्वाद्भर्तृसेवादौ नास्ति भवतीनामधिक
इत्याह ॥ भर्तुरिति ॥ अमायया निष्कपटतया, न तु भवतीना
न्यासक्तमानसत्वेन मायावतीनाम् ॥ तथा पतित्यागनिषेधेऽ
नास्ति भवतीनामधिकारो, मय्यनुरक्ततया लोकद्वयाभिलाषराहि
त्वादित्याह ॥ दुःशील इति ॥ किञ्चापातकी चेन्न हातव्यो, यु
ष्मद्भर्तारस्तु पातकिन एव । ज तुमात्रप्रीतिपात्रे जन्मप्रभृतिरक्ष
परायणे मयीर्ष्यावत्त्वेन साधुद्वेषपरत्वात् कृतघ्नत्वाच्च । कृतघ्न
श्चातिपातकित्वेनोक्ता । तदुक्तं, ब्रह्मघ्ने च सुरापे च चौरे भ
ग्नव्रते तथा * निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृति
ति । ननु तत्सेवादावनधिकारेऽप्यौपपत्यस्य निषिद्धत्वात् तदङ्गी
कारे स्वर्गादबाधस्त्ववश्यम्भावीति चेत् तत्राह ॥ अस्वर्ग्यमिति
कुलस्य ब्राह्मणाद्युत्कृष्टकुलस्य स्त्रियस्तदस्वर्ग्यादिदोषावह, न
गोपाङ्गनानां युष्माकम् । तथाच तन्निषेधवाक्यानि तत्पराणी
भावः ॥

निवृत्तिपक्षे यथा कुलस्त्रिय औपपत्यं दोषावहं तथा श्रुतमर्थ
रित्यज्याश्रुतार्थपरत्वं श्रुतहान्यश्रुतकल्पनादिदोषावहमित्यर्थः ॥२

ातत् सर्वं लोकदृष्ट्या भगवतोक्तम् । वय तु पुरुषोत्तमे
का अतो नास्माक स्वधर्मत्यागप्रयुक्तो दोषो, भगवदारा-
र्वोत्तमधर्मत्वादित्याशङ्कैव तर्हि न लौकिकस्नेहस्योपायो
। कामशेषस्य लौकिकस्य हीनत्वादित्याशयेनाह ॥

णाद् दर्शनाद् ध्यानान्मयि भावोऽनुकीर्तनात् ॥
था सान्निकर्षेण प्रतियात ततो गृहान् ॥ २७ ॥

ादिति॥आदौ श्रवण भगवत्प्रतिपादकवाक्यादीना भगवति
त्पर्यावधारणम् । पश्चात् तेषामनुकीर्तनम् । अवधारितार्थस्य
रणायाभ्यासो मननमिति यावत् । ततो ध्यान श्रुते मते-
तस्य स्थिरीकरण निदिध्यासनम् । ततो दर्शन तदर्थ
व. । भगवत्कृपया साक्षात्कारस्तस्माद् यो मयि भावः
लक्षणो यथा भवति न तथा सन्निकर्षेण भावो भवति ।
सङ्गेन लौकिक एव कामशेषभूतो भावो भवतीत्यर्थः ।
माच्छ्रवणाद्यर्थं गृहान् प्रति यात । यद्वा, न वय सम्भो
ोऽपि तु प्रेमलक्षणभक्तिमात्रेच्छावशोऽतः सर्वं विहायात्राग-
तस्तदर्थं भवत्सन्निकृष्टतया स्थास्याम इतिचेत् तत्राह ॥श्र-
ति ॥ स च मयि भाव' श्रवणादिना यथा भवति, न
न्निकर्षेण । ततस्तदर्थं गृहान् प्रति यात । यद्वा अहो भगव
ावस्थानेऽपि वयमयोग्या इति खिन्नचित्ता आलक्ष्याह ॥
दिति ॥ मन्मुख्यभक्ता' सामीप्यसालोक्यादिकमपि न का-
कि तु श्रवणकीर्तनादिभिरेव रमन्ते तेऽतो युष्माभिरपि
दिभिर्निरुपाधिको मयि भावः सम्पाद्य , किं सन्निकर्षप्रार्थ-
भाव.। अनभिज्ञापक्षे, अहो दैव, यस्मिन् वयमनुरक्तचित्ताः

भेमाभिकामाः कदापि त्रियोक्तुमयोग्यास्ताभ्यः स्वाङ्गसङ्गं न प्रयच्छ
ति स्वसन्निधाववस्थानमपि निषेधत्यतः किं कुर्मः क गच्छाम इ
त्याकुलमानसा लिखितचित्रवदवस्थिता दृष्ट्वा तासां पूर्णभावम
लक्ष्य तस्य परमदार्ढ्यसिद्ध्यर्थमाह ॥ श्रवणादिति ॥ परिपाकपर्य
न्त सम्पादनीयो भावो यथा श्रवणादिना भवति न तथा सन्नि
कर्षेण । सन्निकर्षस्योत्कण्ठाशैथिल्यकरत्वादपक्वे भावे त्वङ्गसङ्ग
न रसावहस्तस्मात् तत्परिपाकहेतूत्कण्ठावृद्ध्यर्थं गृहान् प्रतियाते
त्यर्थः । यद्वा, अथवा मदभिस्नेहादिसनेन मयि साधारणप्रीतिमसं
भवस्य इत्युक्त्वा कामोपाधिकप्रीतौ भर्तुरित्यादिकमुद्भावितवा
अथेदानीं तस्याभिवृद्ध्यानुपायमाह ॥ श्रवणादिति ॥ यद्यपि वर्त
मानकाले कुलस्त्रीणां युष्माकं निषिद्धो भावो नास्तीत्यहं सम्यक्
जानामि तथापि शुद्धभावे दोषप्रवेशभयात् तत्र दोषोद्भावनं मय
कृतम् । शुद्धभावश्च श्रवणादिना यथा पूर्णतां गच्छति, न तथ
सन्निकर्षेण प्रत्युत सन्निकर्षेण सन्निकटास्थितस्य मालिन्यं भजते
तौष्ण्यन्दानुत्थानेन निवर्तते च । तस्मात् तदर्थं गृहगमनमेव युष्मा
कमुचितं, न त्वत्रावस्थानमिति भावः । यद्वा, कृष्णाङ्गसङ्गयोत्क
ण्टोत्कण्ठायुतानां कोटिब्रह्मकल्पपर्यन्तकुम्भीपाकादिनरकपाताद
प्यभीतानां सत्कुलाकद्वयानामस्माकमाशयमविज्ञाय किममनेन प्रला
आरब्ध इति कोपेन व्याकुलस्वान्ता आलक्ष्य तत्कोपमन्यथा प्रक
ल्प्याह ॥ श्रवणादिति ॥ अहो भर्तृशुश्रूषादिधर्मनिधिभूतासु यथो
क्तदोषगन्धेनापि विमुक्तास्वस्मासु दोषमारोप्यायं प्रलपतीति को
पो न कार्यः । उक्तवाक्यस्य प्रासाङ्गिकत्वात् । युष्मदभिप्रेतस्
भावः शुद्ध एवेत्यहं सम्यग् जानामि । स च मयि यथा श्रवण
दिना वृद्धिं लभते, न तथा सन्निकर्षेणः । ततो गृहान् प्रतियातेत्य
र्थः । मानिनीपक्षे, ननु किमेवं कल्प्यते,सद्भावगृहीतोऽहमेव भव

र्ता, न तु पित्रादिदत्ता गोपा इति । सद्भावस्यापि सम्प्रति
षु तेष्वेव सत्त्वादुत्पन्नस्याप्यऽसन्निकृष्टे त्वयि सम्प्रति नि
देतिचेत् तत्राह ॥ श्रवणादिति ॥ यथा श्रवणादिना मयि
ष्मदन्तःकरणेषु वर्तते तथा सन्निकर्षेण पतिम्म येषु तेषु
ह सम्यग् जानामीत्यत किमिति स्वभावतिरोधाने भ
वृत्तास्तस्माद् गृहान् प्रति न यातेति नञोऽनुषङ्गः । यद्वा,
ानिसत्राऽकारप्रश्लेषे, अभावे न ह्यऽ नो ना च * इस
अ यात, न प्रतियातेत्यर्थः । यद्वा, ननु मदभिस्नेहाद्भवन्सो
शया इति भवता कथ ज्ञातमितिचेत् तत्राह ॥ श्रवणादि
हर्निश मच्छ्रवणादिना तथा सन्निकर्षण मन्निकटागमनेन
मयि भावो वर्तत इति मया ज्ञायते, तत कपटेन पतिसेवा
ान् प्रति न यातेत्यर्थः । यद्वा, ननु पत्यादिसन्निधावेव स
ास्यामस्तत्सन्निकर्षेण च तत्र भावोऽपि भविष्यति, तत्पू
नादिना धर्म्मादिकमपि सेत्स्यतीति तत्राह ॥ श्रवणा
। तत्सन्निधाववस्थितानामपि युष्माक यथा मयि भावो
ते मच्छ्रवणादिपरत्वाद्, न तथा पत्यादिषु तदभावात्। ततो
ादि पूर्ववत् । एतेन किमिरोव स्वपत्यादिषु भाववतीनाम
र्माधिकाराभाव वदसीत्युपालम्भोऽपि निरस्तः ॥
त्तपक्षे, एव वेदवचसा भूतेऽर्थे प्रामाण्य नास्त्यतो वेदान्त
ामपि क्रत्वर्थकर्त्रादिप्रतिपादनपरत्वमभिहितमधुना तूपनि
षणि प्रामाण्य, तथापि स्वप्रकरणगतमनोव्यापारविधिशे
तथाच यथा यूपाहवनीयादीनि अलौकिका यपि शास्त्रेण
तद्बुद्धिविधिशेषतयैवोपनिषद्भिर्ब्रह्म समर्प्यत इत्याशयेनाह ॥
ति ॥ आत्मा वा अरे द्रष्टव्यः श्रोतव्यो म तव्यो निदि
ष्य., आत्मा अपहतपाप्मा, सोऽन्वेष्टव्यः स विजिज्ञासित

त्मेत्येवोपासीत, आत्मानमेव लोकमुपासीत, ब्रह्म वेद ब्र
मीत्यादिना विहिताच्छ्रवणाद्दर्शनान्निदिध्यासना मनना
न आत्मनि भावः कार्यान्वितस्वार्थपरत्वविधया तत्परत
भवति, न तथा सन्निकर्षेण = तत्त्वमस्याद्यभेदमात्रबोधने
ात्यनमात्रेण प्रामाण्य भवति । तथाच यथोक्तविधाने
ोऽसावात्मा कि ब्रह्मेत्याकाङ्क्षाया, नित्य सर्वज्ञः सर्वगत
नित्यशुद्धबुद्धमुक्तस्वभावो विज्ञानमान दमित्येवमादितत्स्व
गेन सर्वा उपनिषद उपयुक्ता । तदुपासनाच्च शास्त्रदृष्ट
ल भविष्यति । कर्तव्यविध्यननुप्रवेशे वस्तुमात्रकथ
ानासम्भवात्,—सप्तद्वीपा वसुमती, राजाऽसौ गच्छतीत्या
त्रदुपनिषद्वाक्यनामानर्थक्यमेव स्यादिति भावः । तस्मा
कार्यसस्पृष्टरूपान् यात गच्छत। तद् युष्माक न्याय्यमि
२७ ॥

भगवद्वाक्या युदाहृत्य तत. कि वृत्तमित्यपेक्षाया गोपिका
[दाहृतु श्रीशुक उवाच ॥

श्रीशुक उवाच ॥

विप्रियमाकर्ण्य गोप्यो गोविन्दभाषितम् ॥
णा भग्नसङ्कल्पाश्चिन्तामापुर्दुरत्ययाम् ॥ २८ ।

। यथोक्तप्रकारमत एव विगत प्रिय यस्मात् तद्विप्रियम्
ावचनेऽपि विप्रियत्वभ्रमः। यतो भाषितम् ।भाष व्यक्ताय
स्मरणाद् व्यक्त—प्रतियात व्रजमित्यादि स्पष्टनिषेधरूपम्
ात्दश्रवणे, स्पष्टार्थकमपि वाक्यम यथा प्रतीयत इत्याश
ायाह ॥ आकर्ण्य ॥ सम्यक् तान्मनो दत्वा अक्षरशः श्रुत्वा

तात्पर्यावधारणपर्यन्तं श्रुत्वा । एतेन तद्वाक्यपरीक्षार्थत्वमुक्तम् । तत्रापि गोविन्दस्य, गा वेदादिरूपा वाणी विन्दतीति गोविन्दस्तस्य वेदार्थसम्प्रदायप्रवर्तकस्य सर्वज्ञस्य परमाप्तस्य भाषितम् । प्रतारकभाषिते हि संशयो भवति—किमभिप्रायेण प्रयुक्तमिदं वाक्यम् इति, न तु परमाप्तभाषिते इति सूचितम् । ताश्च गोप्यः स्त्रीयत्वात् प्रतारणाऽयोग्यास्तस्मात् यथार्थं वदतीति तद्वाक्यान्निश्चिक्युः । अहो गृहादिकं त्यक्त्वा वयमागता वा तादृशानमिव पुनस्तद् ग्रहीतुमशक्ता भगवद्वाक्याल्लङ्घने इति विचार्योभयविरोधे शरीरपरित्याग एव कर्तव्य इति निश्चिक्युः, विषण्णा = विषादम् इतिकर्तव्यतायां मूढतां गताः। हतः सङ्कल्पो भगवत्सङ्गमानन्दविषयको यासां ताः । दुरन्तां चिन्तां—अहो भगवता किमिदमुक्तम्, किं भविष्यतीत्येवमादिरूपां प्रापुः ॥ अनभिज्ञापक्षे, इति गोविन्दस्य भाषितं प्रियार्थकमप्युत्कण्ठास्वभावादप्रियमेव । गोवर्द्धनधारणादिना सर्वदा रक्षापरायणस्य महात्मन इदं वाक्यमतो नानृतमिति तासां चित्ते प्रतीतिर्जातेति गोविन्दपदम् । नैपुण्यराहित्येन यथाश्रुतार्थमात्रग्रहणसंद्योतनाय गोप्य इत्युक्तम् । ततो विषण्णाः परमखिन्नाः, हतस्तद्रतिविषयः सङ्कल्पो मनोरथो यासां ता दुरत्ययाम् चिन्तामापुः । अहो कलगीतमाकर्ण्याह्वानभ्रमात् कुलधर्मधैर्यादिकं विहाय वृथैवात्र समागताः, प्रेमार्द्रोऽप्ययमस्मद्भाग्यविपर्ययाद्विरतो गतः, किं वाऽस्मत्परीक्षार्थं दाक्षिण्यं विहाय वामतां गतवान्, किं वाऽस्य मनसि प्रेमलेशोऽपि नासीद्, भ्रमादेव तु वयमेतस्मिन् अनुरक्ताः, किं वाऽस्मदीयं कञ्चिदपराधं ज्ञात्वा तद्दण्डदानायोद्यतस्तत् किमधुना पादादिभिरनुनयामः,,

ातिवचनेन व्रजं प्रति निवृत्त्या वैतदाशयं निर्धारयेम, एत
ान वा करवाम । एतदादिष्टं वा ताशनसमं पर्यास्थाराधनं
प्रभवाम । किञ्चैतत्समक्षे यमुनाप्रवेशादिना सद्यः प्राणं
एवं चेत् पुनरेतन्मुखसरोजं कथं पश्याम, एतदद्भुत
ापि स्यात्तु कथं प्रभवाम । अहोऽतिकष्टं, किं कुर्मः, क
ात्येवमादिरूपा चिन्ता प्राप्तवत्यः ॥ मानिनीपक्षे, इ
प्रियं गोविन्दभाषितमाकर्ण्य विषण्णा भग्नसङ्कल्पा इ
चिन्ता प्रापुरङ्गीकृतवत्यः ॥
ुनिपक्षे, इत्येवं विगतं प्रियगोविन्दस्य वेदबाह्येभ्यो वेद
स्वीकृततच्चद्वादिविग्रहस्य भाषितमाकर्ण्य विषादं प्राप्ताः
' प्रत्यगभिन्नब्रह्मप्रतिपादनसङ्कल्पा यासां ताः । गोप्य
म्बन्धि यः श्रुतयो दुरत्ययां चिन्तां प्र, आस्तिका अप्य
य प्रवृत्ता, अहो कथं भविष्यतीत्येवरूपा प्रापुरित्यर्थः॥ २
तामाप्तौ सत्यामवस्थानमाह ॥

कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्-
बिम्बाधराणि चरणेन भुवं लिखन्त्यः ॥
अस्त्रैरुपात्तमसिभिः कुचकुङ्कुमानि
ास्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥२९॥

वेति ॥ अवशुचः प्राप्तशोकाः श्वसनेन शुष्यद्बिम्बाध
खानि कृत्वा । यद्वा मुखानि अव अवाञ्चि अधो मुखा
खानां तथा करणं च कासाञ्चिदहोऽस्माकं नास्त्यद्या
ाको, नो चेत् तेन वशीकृतो भगवान्नैव ब्रूयादित्यभिप्रा
ासाञ्चिदहो परमप्रमास्पदेन भगवतैवमनङ्गीकृतानामस्म

मधो वा काप्यवस्थातु योग्यता नास्तीत्याशयेन २ कासा
सर्वगुणगणालङ्कृतविग्रहस्य करुणासागरस्य सर्वज्ञस्य
एवंविधोक्तिर्मन्दभाग्याऽस्मल्ललाटदर्शनजन्याऽत. स्वल-
न प्रदर्शनीयमित्यभिप्रायेण ३ कासाञ्चिदहोऽस्मदीय क-
ध स्मृत्वा भगवानेव वदतीत्यतो नम्रीभूय क्षमापनीय इ-
४ कासाञ्चिदहोऽस्माकं वनभूमौ निकृष्टजनवदागमन
व सम्पन्नमित्याशयेन ५ । अथ. कृतानि मुखानि वि-
॥ शुचः शोकादुद्भूतेन शोकसम्बन्धिना वा श्वासवायुना
शोषं गच्छन्तो विम्बफलतुल्या अधरा येषु । शोकानल-
ाप्तश्वासेन शुष्यन्त. शुचः शुचेराघटस्य श्वसनेन वायुना
श्वसदृशा अधरा येष्विति वा । एवंभूतश्वसनेनाधरा-
शरीरं शोषयित्वा दीपयिष्याम इत्याशय. । चरणेन वाम-
ष्ठैर्भुवं लिखन्त्य. । काश्चिदहो श्रुत्यादिरूपं तिरोधाय
ोपाङ्गनाविग्रहो वृथैव अस्माभिराश्रित इति पश्चात्ताप
इव । अहो किं भूमिभारभूता अस्मानेव निश्वसानेन
स्मन्नाशायाऽयमवतीर्ण इति । काश्चिदहो भगवतीं सीता-
नपि भूमिं प्रवेशयितुं प्रवृत्तोऽसीति । तथा व्याप्तकज्ज
' स्तनकुङ्कुमानि क्षालय न्त्य. । अहो नास्तीदानीं नेत्र-
लस्य स्तनस्थलकुङ्कुमस्य च किमपि प्रयोजनमतः क्षा
मयम् । तत्क्षालनं चास्मिन् समयेऽप्यजलालाभादश्रुज
यैम् । कुचेषु च इतः परं मषीलेपो विधेय इति सूचयन्त्य
न्त्य इति वर्तमानापदेशेन मार्जनाय प्रवृत्ताभिरपि, प्रमा
ाहतुल्याभिरश्रुधाराभिस्तु मार्जनं न सम्पन्नमेवादवानलप्र
ापशोष्यमाणत्वादिति ध्वनितम् । उरुभरपदाभ्यां दुःख
ाष्ठोच्यते । महादुःखातिशयवशो दुःखसागरनिमग्नाः

ञ्चिदपि वक्तुमशक्तत्वात् तूष्णीं तस्थुः स्मामुखस्यावाक्
वदाभिमुख्यस्य, शोकेनाऽन्तःकरणस्य, बिम्बाधरशोषेण
य, पदा भूमिलखने शरीरस्य, अश्रैरिन्द्रियाणां, कुङ्कु
कान्तेः, उरुदुःखभरेणानन्दस्य, तूष्णींस्थित्या चैतन्यस्य
ावाभिधानात् । श्वसनेनेति प्राणपीडाकथना मूर्च्छिता
ाणुरिव स्थिता इत्यर्थः ॥ अनभिज्ञापक्ष—मुखानामथ.
ासाञ्चिदहो वयमत्रागताः सम्मानार्हा अप्येतेन न स
, प्रत्युत, प्रतियातेत्यादिवाक्यैरेव मानिता इति लज्जा
ग्नहृदयत्वेन। कासाञ्चिदहो पश्चादिक विहायैवंविध कर्म
त्तानामप्यस्माकं प्रवृत्तिर्निष्फला जाता, इतः परं किं
इति लज्जाव्याकुलचित्तत्वेन । कासाञ्चिदहो एतेना
वशीशब्दमाकर्ण्याह्वानभ्रमेणैव समागता, अतोऽस्माकं
प्रकटितमिति लज्जया । कासाञ्चिदहो एवंविधा दशा
ः परं व्रजं गताः कथं तत्र सखीजनेभ्यो मुखं प्रदर्शयि
ते लज्जया । कासाञ्चिदहो विनाऽऽह्वानमागता, इतः पर
ीयसौभाग्यदर्प इति वदतोऽस्य कृष्णस्य समक्षे मुख
ष्याम इति लज्जया । कासाञ्चिदहो सर्वालङ्कारालङ्कृ
ीयं मुखमस्मै न रोचते, एतत्समक्षस्थापनाऽयोग्यमिति
। कासाञ्चिदहोऽस्य मुखमवलोक्याऽस्य महानानन्दो भ
ाशया समागतानां परं विपरीतं जातमिति लज्जया ।
दहोऽस्मदन्तःकरणनिविष्टप्रमातिशयमनवबुद्ध्यैतेनैवमुक्त-
ङ्गसमीपे एवमागमनम् अनुचितं जातमिति लज्जया ।
दहो नास्त्यय का ताना सर्वथा नेतिनेतीत्येव वद तीनां
एवम्भूताऽनर्थकरो योऽस्माभिरङ्गीकृतोऽतस्ताभिरुपहास्या
इति लज्जाविष्टचित्तत्वेन। कासाञ्चिदहो इय मा किं व-

य मा किं कथयिष्यतीति परस्परप्राप्तलज्जया । कासा-
ध्रुत मुखनिःसृतेनविधोक्त्यनलज्वालया वृथाऽस्मन्मुख
: भवत्विसाशयेन । कासाञ्चिदहो यद्यप्ययमेवमस्मद्दुः
कस्तथाऽपि प्रज्ज्वलिताऽस्मदन्त करणान्मुखनेत्रादिद्वारा
भिरतिप्रचण्डज्वालामालाभि स ताप न प्राप्नुयादित्या
कासाञ्चिदहो पूर्व प्रसन्नचेतस्तया वने विहरणपरो वशी
त्रोऽप्यस्मन्मुख दृष्ट्वैवविच क्षोभ गतोऽतोऽस्मै क्षोभकर
र प्रदर्शनीयमित्यभिप्रायण । कासाञ्चिदहो नेत्रद्वारा का
नशक्तिमस्मद त करणे प्रवेश्याऽस्मान् व्यामोहयतीत्येत
। स्त्रनेत्रस्थापन न कार्यमिति भावेन । कासाञ्चिदहो
न्तमस्म मुखमवलोक्य कोपाक्रा तमेतदीय मुखमिति भ्रा-
प्राधिकमस्यौदासी य मा गच्छत्वित्याशयेन । कासाञ्चिद
क्तिज यशोकोद्भूतगमुद्रकल्पाश्रुजलप्रवाहभाराक्रा तशि
र्दस्थापनाऽशक्त्या । कासाञ्चिदेवम्भूतमप्यस्मदीय मुख-
तिकर न भवति, किमुताश्रुधारासम्पर्कमलिनीकृतमतः
ताश्रुप्रवाहोऽध पातनीय इति प्रेष्ठचेतसि प्रीत्युत्पत्त्याश-
साञ्चिदहो धिक् स्त्रीचाञ्चल्य, येन प्रीतिलेशेनापि हीन-
णवदतिकठिनस्वा तस्य समीपेऽतिरभसा समागता, अतः
। स्वयमाहूयैव वक्तु प्रवृत्तस्य कृतघ्नस्य मुखमपि नाव-
मित्याशयेन । कासाञ्चिदहो विधातरऽतिकठोरा त करण!
नभिज्ञ' दु खपात्रभूता अस्मान् विनिश्चित्याऽतिदुःख दातु
म, भवतु, शपथोऽस्ति तव, यदि यावत्सामर्थ्य दुःख न
त, तस्मादितोऽप्यधिक दु ख यद्यस्ति तव समीपे तर्हि
भ्य प्रयच्छ, विलम्ब मा गच्छद शिरस्तवाग्रेऽस्माभि-
मेति विधातरि कोपावेशेन । कासाञ्चिदहो परस्परनेत्रस

त् परस्परभावविपर्ययो जातः—एतस्य कान्तस्य
भावोऽस्मच्चेतसि प्रविष्टः, कान्तानामस्माकमत्रहि
ावोऽस्य मनस्यऽतस्तथा मा भवत्विसाशयेन । क
हूक्त त्वया, भवत्वन्यदापि यद् वक्तव्य तद् वद
ग्रे स्थापितमित्यभिप्रायेण । कासाञ्चिदहो एवं
रया पुनः पुनः किमर्थमस्मद्वेधने प्रवृत्तोऽसि, य
र वय तर्हि सकृदेव तीक्ष्णाऽसिना ग्रीवोपरि निप
शिरासि छि धीत्याशयेन ।कासाञ्चिदहो कृतम
यासेन, त विनैव नवसौन्दर्यशस्त्रो मूलितग
सर्वदैव नम्रीभावाऽस्तीति भावेन। कासाञ्चिदहो
कमेवविधमस्मदीय मुख रचित, यदस्य गोपाल
तनकत्वात् तत्समक्षे स्थापयितुमयोग्यमिति पश्चा
दहो मानलेशेनापि विनिर्मुक्तानामेतासा धिक्
देवाङ्गनादकृताऽवज्ञानभयेन । कासाञ्चिदहोऽ
वशीरवेण स्वभूत्येनास्मदीयमनोरत्नमञ्जूषामपह्नर
। वदतीत्यतोऽस्माद्विभेतव्यमिति भावेन ।कास
नेवमुपदिशसि, न वयमुपदेशार्थं तव समीपमागता
देशासि चेत् तर्हि विषसम्पृक्तमिष्टान्नवत् तथा
मुख नावलोकनीयमित्यभिप्रायेण ।कासाञ्चिदह
देशः, त्वत्सम्बन्धेनाऽधोगमनस्याप्यस्माकमिष्ट
। कासाञ्चिदहो गोवर्द्धनाधस्तात् स्वहस्तेन वधा
ता इति सूचनाय । कासाञ्चिदहो सर्व त्वत्तोऽ
यमागता, अतः किमर्थमेव बहु भाषसे इति ज्ञ
ः शोकादुद्भूतेन श्वसनेनोष्णश्वासेन शुष्यन्त,
पे सति विगतस्थौल्यैः स्पष्टवलिमद्भिर्बिम्बफलैः

पेषु । अस्मदधराऽमृत मियो धास्यतीत्याशया समागताना
नङ्गोत्थशोकानलस्तच्छोषणे मवृत्त इति भाव. ।पुनश्चरणेन
ाङ्गुष्ठेन भुव लिख स । काश्चिदहो नास्ति तत्रापराध.,
पाकमेव । यतो यस्मिन् काले, याताऽबला व्रजे सिद्धा
:स्यथ क्षपा ॐ इति त्वयोक्त, तदा, कुहकशिरोमणेस्तव व-
तविश्वासाभिरस्माभिर्लेखापयित्वा न स्थापितमतोऽधुना
र्मोऽस्म मौर्ख्यमेवास्माकमनर्थकर सम्पन्नमिति ध्वनय स
ाश्चि मद्वचनसाक्षी कोऽपि नास्तीति निर्भयता नोचिता,
र्वाधारभूता भगवती वसु धरा साक्षिभूता विद्यत एवेस्य-
ा विभेतव्यमिति सूचय स इव । काश्चिद भुवनैकसुन्दरेण
गृहीतचेतसा नास्यस्माक तथाविध पातिव्रत्य किमर्थमेव
ाहृनोऽसीति बोधनाय जारवतीलक्षण स्वस्मिन् दर्शय स
ाश्चिदहो हत्रैव मुखाद्यलक्रियाऽतः पर मृदमुत्पाद्य तया
ानि लेपनीयानीति शोकोद्भूतमुत्कटवैराग्य बाधयन्स
ाश्चिदहो भूमिरपीयमस्मदपेक्षया वरा, यस्यामस्मत्प्रेष्ठपा
ास्पर्श सदैवास्तीति ज्ञापय स इव । काश्चिदहो यादृश
ास्मभ्य दत्त तादृश दु खमस्मै प्रदेय, तच्चाऽस्मदङ्गस्प
य भविष्यतीसत्युग्र तप सम्पाद्य भूमिभाव प्राप्य स्वा
नेनाऽय पीडनीय इति व्वनय स इव । काश्चिदहोऽस्या
भूमावेव विधातिकठोरचित्त कोऽपि नास्त्यऽतोऽयमी
मत्र जात इति सूचयन्त इव । काश्चिदहो किमेवविधम्
कर्तु प्रवृत्तोऽसि, किं भूशर्कराद्यपेक्षयाऽप्यस्मदीयानि
ानि कर्कशानि यत्सस्पर्शज मदु खभयादेव जल्पसीति
इव । काश्चिदहोऽस्मद्दु.खाय यत् त्वयाऽऽचरितुमार
याभिर्लिखि वा स्थाप्यतेऽस्मिन्न मनि जन्मान्तरे वाऽस्य

करिष्याम इति ज्ञापय स इव । काश्चिदहोऽस्मा
याप्रतिज्ञमिय भूमिर्धारयत्येतद्धारेण विदीर्णा न
इव । काश्चिदहो मातर्वसुधे! नास्त्यस्मत्साहाय्य
स्त्वयैवाऽय बोधनीयोऽस्य त्वयि प्रीत्यतिशयस्य द
प्रार्थय स इव । काश्चिदहोऽस्य पाषाणवद् त क
स्मत्प्रेमोद्रेकातिरेक भूमिर्न जानासत एवविधदु
। न द्रवतीति ध्वनय स इव । काश्चिदहोऽस्य ह
े कठोर, यत एवम्भूतातिकष्टे सत्यपि न विदी
। इव । काश्चिदहो नास्तीत. पर जीवनकृत्य
धरे कृपया विशीर्णा भव, त्वयि प्रविशाम इति भूि
व्य बोधय स इव । पुनश्चोपात्तमपिभिः कज्जल
नानि मृज स । अहो नेत्रस्थश्यामतैवानर्थकरी
ारा त करणे कृष्णे स्नेहमुत्पाद्यवावधा दशा वय
या सह साऽपि निःसारणीया । यत एवविधच
धैतवास्माक श्रेयस्करीत्याशयः । अनेन त्वत्माप्त
ाप्तभूतेष्वस्मच्छरीरेषु निःभीमतापक्रकचेन त्रिः
कृत श्यामसूत्ररेखाद्वयामसपि ध्वनय स इव । 
। तत्प्रवाहधारा बोधिता । मृज स इति वर्तमान
यमुनाद्वयकल्पाऽश्रुधाराद्वयस्य कुङ्कुममार्जनाह
सतापानलस्य तच्छोपणोन्मुक्तस्य विवादे व
पराजयो वा न सवृत्त इति द्योतितम् । उरुदुः
यासा ता । भारासहिष्णुतयैव चेतनापगमात् तू
इव तस्थुरित्यर्थ. ॥ मानिनीपक्षे मुखानाम् अ
त परपुरुषमुखावलोकनमप्यस्मभ्य न रोचते इति
कासाञ्चिदऽस्म मुखावलोकनमपि तवाऽतिदुर्ल

्रनिरस्तमित्यतिदर्पख्यापनार्थम् । कासाश्चिदहो न वय
रिण्य , किन्तु कुलाङ्गनास्तल्लक्षणस्यास्मासु सत्त्वादिति
। कासाश्चिदहो कृष्ण त्व त्वतिधूर्तोऽसि, परदारानै-
न् लज्जालेशेनापि विनिर्मुक्तोऽसि । वय तु लज्जासागरे
इति स्वस्य लज्जावतीत्वबोधनाय । कासाश्चिदहो अधो-
ादकर्मोपपत्त धर्मशास्त्राभिज्ञानामस्माक सर्वथा परिहर
त स्वस्य परलोकभयाविष्टताख्यापनाय । कासाश्चिदहो
कमर्यादाऽभिज्ञा अधोमुखतापादक कर्म कर्तुं नार्हा , कि
हु जल्पसीति स्वस्यापकीर्तिभयाविष्टताख्यापनाय । का-
त.करणस्थामुत्कण्ठा मुग्धादिगिकासमर्पलोरयाय माऽव-
ाशयेन । अहो स्वपतिविरहजनितशोकोद्भूतौष्ण्यव्याप्त
श्वास इति प्रतीतिजनकेन श्वसनेन, यद्यप्यस्मदधरपाना
त्र महती वर्तते तथापि तत्सिद्धि. स्वप्नेऽपि दुर्घटा,
त्वया बलात्कारेणाऽबलानामस्माकमऽधराऽमृतपाने क्रि
रस्य पीयूष तु न लप्स्यसि, तस्य शोष्यमाणत्वादित्या-
चरणेन भुग्न लिख्यन्स. ॥ काश्चिदस्मत्पादरजोऽपि तव
ु, इतरत्तु दूरगतमिति ध्वनयन्त्य इव । काश्चिद् भूमिम-
र्ग्यामस्तव वशीभूतास्तु न भविष्याम इति सूचयन्त्य
श्चिद् बलात्कारेण स्पर्शादिक करिष्यसि चेत् तर्हि भूमि
ादाय, कसाय वा गत्वा कथयिष्याम इति द्योतयन्त्य
हो बलात्कारेणाऽयमस्मान् ग्रहीष्यतीति भयादिव मृषा
वदर्थमस्माभिर्नेत्रेषु मषिर्न धृता, तव तथा भ्रमश्चेन्निःसा-
ाशयेनोपात्तमषिभि कुचकुङ्कुमानि मृजन्त्यः । न त्व-
ाषु कुङ्कुमा यऽस्माभिरुपलिप्तानि, तव तथा भ्रमश्चेत्
ने प्रक्षाल्य तेषु मषिलेपोऽस्माभि. क्रियते इति सूचय-

। मार्जनादेरकृतत्वा मृज"स इत्युक्तम् । उरुदुःखभरा
स्थु' स्म ॥

वृत्तिपक्षे, यथोक्तवाद्युक्तयुक्तिभिः श्रुतीनां महती पी
येनाह ॥ कृत्वेति ॥ चरणेन मूलरूपेण भुव स्वाद्यु
। परमात्मान लिख सत्तत्प्रतिपादन मुख्यतात्पर्यवर
तय', अवशुच. माप्तशोका' सत्यः, श्रुत तभागलक्षणा
वाद्युक्तस्वार्थलक्षणेन श्वसनेन शुष्यद्बिम्बाधरस्थानी
पादनभागा यत्तु तथाभूतानि कृत्वा, अस्रैः स्वरुधिरार
रसैरुपात्तमपिभिस्तत्तद्वादिकरस्थलेखि याहृदै , कु
ना स दिग्धकठिनभागाना समीचीनाऽर्थलक्षणानि कु
ज स उरुदु खभरास्तूष्णी तस्थु स्म । उपरुद्धा जा
२९ ॥

विनिवृत्तमूर्च्छास्तूष्णी स्थित भगव तमालक्ष्य किञ्चि
मासुरित्याह ।

ष्ट प्रियेतरमिव प्रतिभाषमाण
कृष्ण तदर्थविनिवर्त्तितसर्वकामा ॥
नेत्रे विमृज्य रुदितोपहते स्म किञ्चित्-
संरम्भगद्गदगिरोऽब्रुवताऽनुरक्ता ॥ ३० ॥

मिति ॥ गोप्यो रुदितोपहते नेत्रेविमृज्य, अहो यद्भवितव
सेव, सम्प्रति भगवद्दर्शन तु सम्यक् कर्तव्यमित्याशयः
वत स्म । भगवत. सदानन्दरूपत्वात् तदाभिमुख्यमे
विर्भावकरमतः सर्वानर्थकर तद्वैमुख्य कथमपि नोचित
व ॥ प्रेष्ठ परप्रेमास्पदत्वादात्मान, प्रियेतरमिवाऽन्या

तभापमाण प्रसाचक्षाणम् । अहो सर्वात्मा सन् किमर्थ-
ीति किंचित्सरम्भेण प्रणयकोपेन गद्गदा अस्फुटस्व-
रा गिर्यासा ता । ननु भगवति ईषत्सरम्भोऽप्यनुचित ,
त्वाद् भगवद्वाक्यप्रत्युत्तररूपा वाणी च कथ निःसृता इ
त्याह ॥ अनुरक्ता इति ॥ स्वल्पस्यापि रागस्य भयनिव
परमानुरागवतीना तासा का भयसम्भावनेति भाव. ।
र्थेनिनिवर्तितसर्वकामा ॥ तदर्थ भगवदर्थ विशेषेण त
ाहित्येन निवर्तिता सर्वे कामा याभिस्ता । तथाच भ
रक्तसर्वकामस्य तदिच्छायाश्च सक्तत्वाद्भगवद्विषयकं
द्र मोक्षकामवद्कामरूपत्वात त मात्रनिष्ठाना तदनुरक्तचेत
त किञ्चिदपि भयमिति भावः ॥ अनभिज्ञापक्ष, तथाभूता
ता अपि ता , अहो किमिसेवमरण्यरोदन कर्तुं प्रवृत्ता ,
प्रसन्नमुखा सन्त स्वस्वगृह तूण कि न गच्छत इत्यव
पदोचैरुवाच तदा तानि वाक्यानि तासा कर्णाऽ वना-
ष्टानि । ततश्च तेरेवोद्योघतास्तत्सजातीयवाक्यैर्भगवद्वा-
त्युत्तर वक्तुमारेभिर इत्याशयनाह ॥ प्रेष्ठमिति ॥ बहु
स्य परप्रेमास्पदत्वेन निश्चितामदानीं, प्रियेतरमिव, यथा
शत्रुर्वदति तथा—प्रतियातेसादिवज्रादप्यतिकठोर प्र-
ारूप वाक्य भाषमाणम् । प्रियेतरमिव अप्रियवाक्यसदृश
ति वा । तत्रापि, कृष्ण सम्प्रत्यपि वेणुनादेन चित्तरत्न
ा आकृष्य सौचित्येन स्थितम् । अत एव, तदर्थं विनि
कामा रुदितोपहते अधीभूते नेत्रे विमृज्य, अहो
योऽयमस्माकमागतस्तम्मात सकृदपि प्रेष्ठस्य मुखपद्मव-
ारिष्याम इत्याकाङ्क्षयेति भाव. । अहो प्रकृष्टत्वेनाश्रितो-
ाऽपराध कथमेवविधमाणा तदण्ड दातुमुद्यत इति सर-

म्भः । स्वस्मिंस्तदङ्गसङ्गायोग्यता विचार्य्य तच्छेधित्यमिरु
किञ्चित्सरम्भणेत्युक्तम्। ननु सर्वथाऽपि प्रेमशू येन तेनाल्प भाषण
दिनेति चेत् तत्राह ॥ अनुरक्ता इति ॥ अनुरागाद यविचारर
तत्वात्प्रत्याख्याता अपि पुनस्तत्रैवानुरज्य त इति भाव. ॥ मानि
पक्षे, वस्तुतः परमप्रिय प्रियेतरमिव प्रतीयमान वाक्य प्रति
षमाण कृष्णमब्रुवत स्म । अहो कथमस्मान् परदारानित्थ वद
ति कोपेनाऽन्तःकरणस्थोत्कटोत्कण्ठया शिथिलीकृतत्वात् स्वल
गद्गदभूता गिरो यासा ता. । यथोक्त प्रार्थनारूप वाक्यमाक
ततोऽप्यधिकमनुरक्ता ॥

निवृत्तिपक्षे ॥ प्रेष्ठम ॥ सर्वे वेदा यत्पदमामनन्ति वेदैश्च स
रहमेव वेद्य इत्यादिश्रुतिस्मृतिभ्यो वेद्यत्वेनात्यर्थमभिमतम् । तत्त
द्रिरूपेण श्रुतीना ब्रह्मणि प्रामाण्य नास्त्यास्त्येवमादिरूप प्रियेतर
प्रतिभाषमाण मत्याचक्षाण कृष्ण फलरूप सदान दात्मक परमात्म
तदर्थंपरमात्मप्राप्त्यर्थ विशेषेण निवर्तिता अधिकारिणा सर्वे का
याभि' । तथाच श्रुति:— यदा सर्वे प्रमुच्य त कामा येऽस्य हृ
श्रिताः * तदा मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इत्याद्या.
रुदितेन स्वार्थानाभज्ञवाद्यभिहिततर्ककृतेन रुदितेनोपहते नेत्रे यथ
भूतार्थप्रकाशनसमर्थे शक्तिलक्षणालक्षणे विमृज्य किञ्चित्सरम्भे
अहो आस्तिकरूपेण स्थितोऽपि भगवानित्थ वदतीति ई
त्कोपेन गद्गदाश्च्छ दत्ता गिरो यासा ता' । किञ्च, तस्मिन्नेव
ऽनुरक्ताः ॥ ३० ॥ ॥ तदुदाहरति ।

गोप्य ऊचु ॥

मैव विभोऽर्हति भवान् गदितु नृशस
सन्त्यज्य सर्वविषयॉस्तव पादमूलम् ॥

भक्ता भजस्व दुरवग्रह मा त्यजाऽस्मान्
देवो यथादिपुरुषो भजते मुमुक्षून् ॥ ३१ ॥

मिति ॥ यद्यपि वय निकृष्टास्तथापि सर्वोत्तमो भवान्
वर्यसम्पन्न , प्रतियातसेवरूप नृशस क्रूरमस्मत्प्राणापहर
वाद् घातुकम । नृशममिति किञ्चित्सरम्भाविष्कार. । यद्य-
ा प्रथम, स्वागतमित्यादिना स्तुतास्तथाप्यऽग्रे,प्रतियाते-
मनाभिधानात् तदपि नास्माक प्रेमातिरेकवर्णनाभिमा
तु व्यङ्गयोत्पत्त्योपहासपरमतस्तन्नापि नृशसमेव । परिच्छि
कीयान्तःकरणवृत्त्यनभिज्ञस्येवविधोक्ति' कदाचिद् घटते,
भोर्व्यापकस्य सर्वाऽ तर्वस्थितत्वात् सर्वा त करणवृत्ति-
इत्याशयेन सम्बोधयति ॥ विभो इति ॥ अत एव व्रज
मय कश्चिवदिति प्रश्नोऽपि न सगच्छते । तत्कुशलाकुश
सीनभूताऽस्मद ्त करणवृत्तिज्ञत्वादित्याशयेनाहुः ॥ स
॥ व्रजस्य का कथा, अस्माभि शब्दस्पर्शादय सर्वेन्द्रि
प विषया सम्यग्वासनोच्छेदपर्य त सक्ता । ससज्य
मूल भक्ता. । तत्त्यागस्तत्र पादमूलभजनार्थमेव, न तु फला-
ाकमपेक्षितमित्यर्थ । सर्वविषयानित्यनेन त्वद्विषयक. का-
ो न भवतीति ध्वनयन्ति । अस्मद तःकरणात् सर्वे वि
द् निस्सृता न स्युस्तव पादमूलभक्ति. कथ तत्राविर्भवेत्
ात तत्त्यागप्रार्थिणीत्यप्यनेन द्योतितम । यच्च भगवतो-
मेय किं करवाणि व., व्रजागमनकारणमिति तत्राप्याहु' ॥
। ॥ तथाच भवद्भक्तानामस्माक स्वीयत्वेन ग्रहणमेवास्म
ावता कर्तव्यम्, एतदतिरिक्त किमप्यस्माक मिय नास्त्येतदे-
ामनप्रयोजनमतस्तदेव सपादयेत्याशय. । तस्मात् प्रतिया-

त व्रज, नेह स्थेयमिति त्यागाग्रहो भगवतो नोचित इत्याहु' ॥
दुरवग्रह, मा त्यजास्मान्। मद्भजन न कर्तव्यमित्येवमाग्रहो दुष्टो भ
वति। सर्वै. कर्तव्य भगवद्भजन, न कार्यमिति दुष्ट आग्रहो जीव
ना वर्तते। परमेश्वरस्याऽप्युक्त आग्रहश्चेत् तर्हि कथ जीवानामु
द्धार । तस्मादस्माकमेव केवलमभाग्यवशादुक्त आग्रहो भगव
त्याश्रित इति सम्बोधनाशय । ननु न मया स्वभजन निषिद्ध्य
ते, किन्तु कामोपाधिक तदिति चेत् तत्राहु. ॥ देव इति ॥ यथ
देव आदिपुरुष. = अवतारिपुरुषो, ये यथा मा प्रपद्यन्ते तांस्तथै
व भजाम्यहमिति * प्रतिज्ञावान् भगवान् यथा मुमुक्षून् भजते तत्
त्फलप्रदानेनाश्रयते स्वस्मिन्नेव स्थापयति, न तु पुनस्तेषा पूर्वा
स्था सम्पादयति तद्वदस्मदाद्यर्थ तदवतारभूतस्त्वमेवमप्यस्मा
स्त्वदङ्गसङ्गोत्कण्ठाकाङ्क्षावतीर्मा त्यज, अपि त्वस्मदभिलषितफल
प्रदानेनाश्रय। तथाच मोक्षोपाधिकमपि भगवद्भजन यथा मुमुक्षूणा
भगवता शुद्धत्वेनैवाङ्गीक्रियते तथा त्वदङ्गसङ्गोपाधिकमपि तच्छु
द्धत्वेनैवाङ्गीकर्तु योग्याऽस्तीति भाव । स्वसन्निधित्यागो न कर्तव्य
इति वस्तु स्वभक्तत्याग च कर्तु भवान्नार्हति, नाऽपि स उपदेश
सफलो भविष्यतीत्यप्यनेन ध्वनितम्॥ अनभिज्ञापक्षे, भो विभो सम
एव गदितुमपि भवान्न, आचरितु नार्हतीति किमु वक्तव्यमित्यर्थ
यद्यपि परमैश्वर्यवांस्तथापि परमधार्मिकत्वेन प्रख्यातस्य श्रीनन्द
रायस्य पुत्र स्वय च रसार्द्र इति सूचनाय भवानित्युक्तम्। नृश
स साक्षा मारकम्। तथाचास्मदुपदेशाय प्रवृत्तेन त्वया वाङ्नाराच
कृताऽसख्यातस्त्रीवधजनितपातकोत्पत्तिर्न विचारितेति भावः
अथवा, हे विभो! अस्मत्प्राणनाथ। तथाच स्वनाथाऽस्मत्प्राणरक्षण
मेव तवोचित, न तु तन्नाशनमिति भाव । तत्रापि भवान्, मम
मा रस्यथ क्षपा * इति कृतप्रतिज्ञ । प्रतिज्ञाय करोमीति कर्तव

* मिथ्यावचनदग्धस्य इष्टापूर्त्त विनश्यतीत्यादिशास्त्र
द। तथाचास्मद्दोषोद्घाटनाय मद्वत्तस्त्व स्वमतिज्ञानाद्यादि
न पश्यसि । तदुक्त शाकु तलया— राजन् सर्षपमात्राणि
णि पश्यसि * आत्मनो बिल्वमात्राणि पश्यन्नपि न प
भावः । ननु, स्वागत वो महाभागा इति परमकामलमपि
वोक्त तत्किमर्थ विस्मर्यत इति चेन्न । तस्याप्यलक्कृत्य
नवन्निवर्तनार्थतया नृशस एवा तर्भावात् । भवतु भव
ानि स्वतवागस्त्रजालेन दग्धमाणा वयमित, पर परलोक
, न तु व्रज, त्व त्वसख्याता अस्मान् हत्वा कि पद प्रा
न विद्म इत्याशयेनाहु. ॥ ससञ्ज्येति ॥ वा-ताशनवत्
यास्माभि. सर्वविषया न सक्ता इति द्योतनाय समित्यु-
थाच, व्रजस्यानामयम् * रज येषत्यादिवाक्यजात निर-
भाव' । ननु किमित्येवमत्युपालम्भ दातु मद्वत्ताः ।
क्रूरवाणि व' * क्रूतागमनकारणमिति मदुक्त श्रुत्वा दू-
ता भवतीर्दृष्ट्वा पुनर्ग तुकामा निष्कामाश्चालक्ष्य, रज ये-
मया । ततो माऽस्तु कोपो, यत् मार्थनीय तन्नि शङ्क मा-
तेचेत् तत्राहुः ॥ अस्मान् त्वदतिरिक्तविषयकाङ्क्षारहिता
वीयत्वेन समाश्रयस्व। स सञ्ज्येत्यादिना, ननु कथ गोप-
ऽिह भजामीति शङ्काऽपि निराकृता। तव पादमूल भक्ता
वय वनशोभादिनिरीक्षणार्थमागता इति—इष्ट वनमित्या-
हितम् । पादे, पद्मत्वानुक्त्या किञ्चित्सरम्भेण नृशसत्वा-
काठि प व्यञ्जयन्ति । ननु युष्माभि सर्व यथार्थमे
ते, तथापि नाह भवतीर्भजामि, स्वत त्रत्वादितिचेत् त-
हे दुरत्ग्रहेति ॥ अयमाग्रहो दुष्टो भवति । स्वत त्रस्यापि
आग्रहो नोचित । चतुरशिरोमणित्वात् । दुराग्रहो हि

मूढधर्म इति भाव' । अतोऽनन्यगतीरस्मान् मा सृज, सागस्य
र्घाच्यदोषोत्पादकत्वात् । नन्वस्तु दोषस्तेन मम का हानिरित्या
शङ्क्याहु । अहो किमेतद्विधगर्वगिरिशृङ्गमारूढोऽसि । किमात्मका
दात्मारामात् परमेश्वरादप्याधिक्य माप्तोऽसि, यत. सोऽप्येव
करोतीत्याशयेनाहुः ॥ देव इति ॥ यथा धर्माद्यनपेक्षः सर्वलोक
हारकृत पापाऽसंस्पृष्ट सकलैश्वर्यसम्पन्नः स्वयम्प्रकाशो ब्रह्म
दिकारणभूत' स्वभक्तान् मुमुक्षून् भजते तत्प्रदानेन सेवते, त
त्व स्वत तोऽप्यस्म मनोरथपूर्तिं कर्तुं योग्योऽसीत्यर्थ । मुमुक्षू
नेनेत्यते मुमुक्षवो, न तु तदेकेप्सव इति तेषा स्वतो निकृष्टता सूच
ति । यद्वा, अमुमुक्षून् मोक्षाद्यनिच्छून् । यद्वा, मुमुक्षून् तदन्
सर्व त्यक्तुमिच्छून् शरणागतान् । दुरवग्रह इत्यनेन, हे विषमाव
षकमेघेत्यप्युक्तम् । अवग्रहो वृष्टिप्रतिबन्ध इति पाणिनिस्मरणा
दुष्ट — अवग्रहो यस्मिन् स प्रतिषिद्धवृष्टिर्मेघ । तस्य दुष्टत्व
ऊष्मवायुवर्षकत्वात् । तथाचेतरजलस्थानीयस्वपसाभिकाङ्क्षावि
मुक्ता मेघस्थानीयत्वदेकशरणाश्चातकीकल्पा वय त्वदधराऽमृ
पानार्थमागतास्त्व त्वस्मदभाग्योदयात सम्प्रति विष वर्षसि
भवतु, विषमेव पीत्वा मरिष्यामो, न तु व्रज यास्यामः । चातक
स्वभावत्वात् । तस्माद् अस्मान् मा सृज । कृतज्ञस्य तव च ने
मुचितमिति भाव । ननु चातकीसमाना भवतीना मरणेन
चान्यापेक्षारहितमेघकल्पस्य का हानिरिति चेद्, न त्व केवलज
मेघसदृश', किं तु परमाभिज्ञदु'खमोचकमात्रकचेतनरूपपरमात्म
दृशाऽपीत्याशयेनाहु ॥ देव इति ॥ यद्वा, भक्ता अस्मान् भज
दुराग्रहम् आसम तावत् सृज । बुद्धे फलमनाग्रह * इत्युक्तत्व
परमबुद्धिमतस्तवाग्रह एव नोचितो, दुराग्रहस्तु दूरनिरस्त इ
भाव' ॥ मानिनीपक्षे, एव = प्रिय किं करवाणीत्यादिरूप, दृश

देतु नार्हसीति । यद्यपि भवान् सौन्दर्यादिगुणसागर
विभु परमसमर्थस्तथापि परदारा एव न वक्तव्या इति
यदि परदारैरेव तव रमणेच्छा तर्हि या सर्वविषयान्
तव पादमूलं भक्तास्ता दुरवग्रह स्वच्छन्द यथा स्यात्
नस्व । अस्मान् आसम तात् सर्वप्रकारेण सज । यद्वा
दुःसाध्याः प्रति दुराग्रह सज । प्रभवाऽपि भजमानमेव
साशयेनाहुः ॥ देव इति॥ आदिपुरुषो देवो, यदपेक्षया
भुत्वविशिष्टः कोऽपि नास्ति स यथेसर्थ ॥
द्वत्तिपक्षे, एव प्रतिरुद्धा श्रुतयः साक्रोशमाहुः ॥ मैवमि-
व ब्रह्मणि श्रुतीना प्रामाण्य नास्तीत्येवमादरूप नृशंस
क गदितु भवान् नार्हति। ननु नाहं ब्रवीमि, किं तु शास्त्र
भिज्ञास्ते ते वादिन एव जल्प सऽतो नाऽहमुपालम्भविषय
: तत्राहुः ॥ हे विभो[1] व्यापक। तथाच, अनेन जीवेनात्मना
श्य नामरूपे व्याकरवाणीति श्रुत्या नामरूपात्मकसंसार-
। तादृशजीवात्मना त्वमेव ब्रवीपीति भावः। यतः, सस-
वेषयाँस्तव पादमूल भक्ता अस्मान् भजस्व । दुरवग्रहम्
नाय मोक्षमार्गः, किं तु परमानर्थाऽसद्भावप्रापकः । अस-
नवति असद् ब्रह्मेति चेद्वेदेत्यादिश्रुते' । तस्माद् यथा
' मोक्ष' स्यात् तथा करुणो विनयसाशयेनाहुः ॥ देव
तथा आदपुरुषो देवो भवान् मुमुक्षून् भजते मोक्षदाता
तथाऽस्मान् भजस्व। तथाच परमपुरुषार्थमोक्षलाभाय ब्रह्म
माण्यमवश्यमास्थयमित्यर्थ । अयमाशय' । सवान् वि-
तिपाद्यान् सम्यक परित्यज्य ब्रह्मणि समन्वितानां श्रु-
परत्वाभिधान साहसमात्रम । तत्र श्रुतिवाक्याना द्विविधा
प्रवृत्तिः । एका ब्रह्मात्मनोरेकत्वविषया, अपरा सत्यज्ञाना

द्विलक्षणब्रह्मविषया । तत्राद्या यथा, सोऽय देवदत्त इति पद
यस्यैकस्मिन् देवदत्ते पर्यवसान तद्वत् । तथाहि । यथोक्तवाव
सोऽयमिति विशिष्टाभिधायिभ्या पदाभ्या स्वार्थैकदेशान्यक्ति
त्रलक्ष्यपरम् । तथा, तत्त्वमसित्रवाक्यमपि विशिष्टाभिधायि
पदाभ्या स्वार्थैकदेशचैत यव्यक्तिमात्रपरम् । ननु पूर्वत त्रे प
र्थाना ससर्ग , ससृष्टाः पदपदार्था वाक्यमिति वाक्यार्थलक्षण
क्तम् । तच्च द्विविधमप्यखण्डार्थ न सम्भवति । तत कथ वाक्य
र्थलक्षणरू यमखण्ड ब्रह्म वाक्यार्थःस्यादितिचेन्न । वेदान्तशास्
ऽऽचार्यश्रीबादरायणानुयायिभिः, ससर्गो वा विशिष्टो वा वाक्या
नात्र समत. ※ अखण्डैकरसत्वेन वाक्यार्थो विदुषा मत इति व
द्भिरखण्डस्य वाक्यार्थत्वाभिधानात् । नचैव सत्युक्तलक्षणस्य
त्राव्याप्तिः । सामा यलक्षणस्यैव यावद्विशेषव्याप्तिनियमाद् वि
यलक्षणयोरेतयो' परस्पराव्याप्तेरदूषकत्वात् । सामान्यलक्षण
वाक्यप्रमेयत्वमत्राप्यस्त्येव । नचाखण्डवाक्यार्थस्य विशेषलक्षण
भाव. । अपर्यायानेकपदैरेकप्रातिपदिकार्थमात्रपरत्वस्यैव तल्लक्ष
णत्वात् । ननु तत्त्वम्पदलक्षितरूपे भिन्ने ? किं वा न ? । आ
ऐक्यप्रमित्यसम्भवः । द्वितीये पदार्थवाक्यार्थयोरेकत्वापत्तिरि
चेन्न । द्वितीयपक्षोक्तदोषस्पष्टापत्तिग्रस्तत्वात् । नच पदद्वयवैय
र्थ्यम् । लक्षणयैकार्थबोधनार्थत्वात् । त्वम्पदस्य वाच्यार्थपरित्य
गेन चिल्लक्षकत्व तत्पदसामानाधिकरण्ये सति घटते । तथा तत्
पदस्यापि वाच्यार्थपरित्यागेन चिल्लक्षकत्व त्वम्पदसामानाधि
करण्य इति न पदद्वयवैयर्थ्यम् । एव सत्यज्ञानाद्यवान्तरवाक्य
ऽखण्डार्थत्वम् । यथा केन चित् पृष्टोऽस्मिञ्ज्योतिर्मण्डले कश्चन्
नामेति ?। तस्य प्रतिवचन— प्रकृष्टप्रकाशश्चन्द्र इति वाक्यस्य
अत्र प्रकृष्टशब्दान्न च द्रप्रातिपदिकार्थसिद्धिः ।प्रकृष्ट तम इति

स्य प्रकृष्टस तमसेऽपि प्रयोगदर्शनात् । तथा प्रकाशशब्दा-
तासिद्धि । खद्योतादावपि तत्प्रयोगदर्शनात् । तस्माद्रा-
रेसागेनाऽप्रकर्षाऽप्रकाशविरोधी च द्रप्रातिपदिकार्थ. पद
तिपाद्यत इत्यखण्डार्थत्वसिद्धिः । अ यथा च द्रप्रातिपदि
प्रश्नोत्तरतया विशिष्टमर्थं बोधयतो वक्तुरनवधेयवचनता
तथा, विमतम् अखण्डार्थम् । लक्षणवाक्य वात् । प्रकृष्ट
। द्र इति वाक्यवदिति सिद्धम् । यद्यपि प्रमाणा तराभा-
ण्युपनिषदा प्रामाण्यमुक्त, किमबाधलक्षणप्रामाण्य, किं
णान्तरसम्भिन्नार्थविषयत्वात् पौरुषेय वेत्याक्षेपे प्रामाण्य,
प्रमाणान्तरयोग्यार्थविषयत्वात् तत्सिद्ध्यर्थानुवादरूपमप्रा-
। नाद्यः । गृहीतसङ्गतिकस्य पुस सत्यादिवाक्यश्रवणे
ानधिगतार्थप्रमितिदर्शनात् । प्रमाणेन हि प्रमीयमाण
प्रमाणान्तरासत्वान्नो न मिथ्यात्वापादकः । सर्वप्रमा
धिगतार्थगन्तृत्वात् । अ यथा चक्षुषा गृह्यमाणस्य रूपस्य
हणान्मिथ्यत्वाशङ्का स्यात् । न द्वितीय. । प्रमाणान्तरस-
त्वाभावात् । पौरुषेयवचनप्रयुक्तत्वे हि सम्भेदस्य भूता-
त्वे प्रत्यक्षादीनामपि सम्भेद. स्यात् । नापि तृतीय । स्पर्श
द्रव्यविषयस्य चक्षुषोऽनुवादकत्वादर्शनात् । एव सिद्ध
 ब्रह्मणि प्रामाण्ये तद्गताना पदानामर्था तरकल्पना न
श्रुतहान्यश्रुतकल्पनाप्रसङ्गात् । नच तेषा कर्तृस्वरूपमति
ता वक्तु शक्या । तत् केन क पश्येत्, एकमेवाद्वितीयमि
क्रियाकारकफलादेर्निराकृतत्वात् । नापि ब्रह्मण उपा
शेषत्व सम्भवति । एतेन हेयोपादेयशू यत्वेन क्रिया-
द्वैतविज्ञानोपमर्दोपपत्तेः । यद्यप्य यत्र वेदवाक्याना वि
म तरेण प्रमाणत्व न दृष्ट, तथापि ब्रह्मात्मविज्ञानस्य

फलपर्यन्तत्वात् तत्तद्विषयस्य शास्त्रस्य प्रामाण्य शक्य प्रत्याख्याः म । हितशासनाच्चोपनिषदां शास्त्रत्वमिति सङ्क्षेप. । एतेन, स्व गतमित्याद्याक्षेपो निरस्त.। यत्तु— रज येषेत्यादि, तत्तु यथार्थमेव तत्र निद्रितानामज्ञानामपेक्षया ब्रह्मणो निशातुल्यत्वात् । तदुक्त— ' निशा सर्वभूताना तस्यां जागर्ति संयमी ॐ इत्यादि । यत्तु— मा इत्यादि, तदपि तु, असन्नेव स भवति असद् ब्रह्मेति चेद्वेदेत्यादि मात्रादितुल्यत्वाभिमानिनामास्तिकम्म यानामसत्त्वाभिधानेन ते भयोत्पादनस्य समुचितत्वात् । योऽपि— दृष्टं वनमित्यादिनोपह सः, सोऽपि साहसनिव घनः । अ तःकरणतद्धर्माणा ह्रसवेश्वत्व त । अधिकार्य्यभावे, निचाय्य लोकान् कर्मचितान् ब्राह्मणो नि र्वेदमायान्नास्त्यकृतः कृतेनेत्यादिश्रुतीनां निरालम्बनतापत्तेश्चे दिक् ॥ ३१ ॥

यदप्युक्त, तद् यात मा चिर गोष्ठं शुश्रूषध्वं पतीन् सती भर्तुः शुश्रूषण स्त्रीणां परो धर्मो ह्यमाययेत्यादि तत्राप्याहुः ॥

> यत् पत्यपत्यसुहृदामनुवृत्तिरङ्ग !
> स्त्रीणां स्वधर्म इति धर्मविदा त्वयोक्तम् ॥
> अस्त्वेवमेतदुपदेशपदे त्वयीशे
> प्रेष्ठो भवांस्तनुभृतां किल बन्धुरात्मा ॥ ३२ ।

यदिति ॥ यत्पत्यपत्यसुहृदामनुवृत्ति' स्त्रीस्वधर्म इति धर्मविद त्वयोक्तमेतदुपदेशपदे त्वय्येवमेवाऽस्तु । अङ्ग ? हे भगवन्निति कोमलाम न्त्रणेन, न वय प्रतिकूल वदाम इति सूचयन्ति । त्व ि उपदेशविषय । त्वद्बुद्ध्यैव पत्यादिसेवाम्न उत्कृष्टफलप्रदमत साक्षाद्भगवति सति किं परम्परयेति भाव.। यत, ईशे, विविदिषा

सर्वोपदेशानामीशपरत्वावगमादिति भावः । यद्वा, ईशे
भाणि । जीवो हि यत्रान्तर्यामिरूपेण त्वया प्रेर्यते तत्रैव
अत स्वसङ्गमार्थं त्वयैव प्रेरिता वय त्वदाराधन समीहा-
ास्मादन्तर्यामिरूपेण स्वाराधने प्रेरण, प्रेष्ठरूपेण पत्रा
: इत्यस्मद्व्याकुलताऽऽपादिका प्रवृत्तिर्भगवतो नोचिता ।
मेकृतप्रेरणस्यैव प्रबलत्वादिति भाव. । किञ्च, उपदेश-
उपदेशविषयश्च त्वमेवातस्त्वदाराधने नास्ति किमपि
ासाशयेनाहु ॥ प्रेष्ठ. = परमप्रेमास्पदम् । अत एवात्मा,
ास्पदस्यैवात्मत्वात् । स च तनुभृता सर्वेषा तनुर्न तु यस्य
त्वत् । अतः सर्वेषा ब धुरूपो भवानेव य' सम्प्रसऽस्मदनु
न दन दनविग्रहस्तस्मादुपदेशकर्तृतदनुष्ठातृतद्विषयात्मनस्त
मेव मुख्य सर्वाराधनमिति भाव । यद्वा, त्वय्युपदेशपदे
शकर्तरि सति अस्मासु धर्म जिज्ञासमानासु सतीषु एतत् त्व-
मस्तु । न तु वय तथा, नापि भवान्; किं तु भवानात्मे-
थवा, एतदुक्तमुपदेशपदे पुरुषेऽस्तु नाम, त्वयि तु ईशे
न सति एवं क, नैवमित्यर्थ । यद्वा, उपदेशपदे उपदेशेन न
ाये लौकिकपुरुषे आसक्तचित्तत्वे एतदेवमस्तु, ईश्वरे त्वयि
त्यर्थ. । यतस्तनुभृता त्वमात्मा फलरूप । अथवा एवमे-
ेवाऽस्तु । कुतः । उपदेशपदे आराधनीयत्वेनोपदिश्य
पत्यादीना पदे अधिष्ठाने । यत , ईशे । न हीश्वरमधि
ऋते कोऽपि पतिपुत्रादिर्नाम । अध्यस्तस्याधिष्ठानान
इ । तस्माच्च वयमनुचिते कर्मणि प्रवृत्ता इति भाव. ।
ाव त्वयोक्तमेतदेवम् आदावुपदेशकर्तरि आचार्ये त्वग्य
आचार्यसेवनपूर्वकस्यैव धर्मानुष्ठानस्य सफलत्वप्रतिपाद-
त्रापि ईशे परमेश्वरे । एवमप्याचार्य. स्यात् तर्हि किमु

वक्तव्यम् । ईश्वरत्वादेव तनुभृतामात्मा । तत एव प्रेष्ठस्तत ए
ष धु सुहृत् । सात्मकानामेव पद्मादीनां सेवनं दृश्यते, न तु
तानां तेषाम् । तद्दाहविधानात् । अतोऽस्मद्भाग्यवशात् सदान द
ऽऽत्मैव प्रकटितस्तस्मात्त्वत्सेवनं प्रवृत्तानामस्माकं किं तैरिति भाव
अनभिज्ञापक्ष, अधिकारमबुद्‌ध्वैव धर्मेषुपदेष्टुं प्रवृत्तोऽसि । निर्
गुण्ये पथि विचरतां को विधिः को निषेधः* इत्युक्तत्वाद् ब्रह्मज्ञ
नामस्माकं विधिनिषेधाधिकाराभावादित्याशयेनाहुः ॥ यदिति
इति यद्धर्मविदा त्वयोक्तमेतदुपदेशास्पदे तदेकस्त्रभावे एवम
क्रियताम् एवमुपदेशो, न वयं निवारयामः । परन्तु स्वाधिकाराभ
वाद्य त गृह्णीम इति भावः ॥ धर्मविदेति ॥ धर्मस्वरूपमात्रं वेत्
न तु तदुपदेशाधिकारम् । यद्वा, अथापि धर्मविदसि, न तु ब्रह्म
वित् । अत एव ब्रवीषीति सोपहासं व्यङ्ग्यम् । यद्यपि निवारण
मुचितमधिकारं विनाऽरण्यरोदनप्रायस्योपदेशस्य निषिद्धत्वात्
तथापीश्वरत्वात् तत्र नास्त्यस्माकं निवारणसामर्थ्यमित्याशयेनाहुः
ईश इति ॥ यद्वा, अधिकारं विनोपदेशकर्तृत्वमनुचितमपि प्र
त्वान्नो विरुद्ध्यते । ननु, वामैव विभुतेत्युक्तत्वेन विभुतायाः कुः
लप्रवृत्तिजनकत्वावगमाद् अधिकाराऽभावसाधकमात्मानुभवमावे
यन्ति ॥ प्रेष्ठ इति ॥ अस्मत्प्रेष्ठो भवानेव । सर्वेषां तनुभृतां ब
हितैषी परमात्मा आत्मा च । यद्वा, सर्वेषां परमप्रेमास्पदभूतो य आत्
यश्च सुहृत् परमेश्वरः स, तत्त्वमसिवाक्ये तत्त्वम्पदोपलक्षि
भवानेव । तथाचाखण्डवाक्यार्थबोधवतीनां कुतस्त्वदुक्तधर्मेऽधि
कार, कुतश्चाऽशुभसम्बन्धः । पश्यतः सर्वभूतानि सर्वावस्था
सर्वदा * ब्रह्मभूतस्य संयोगो नाऽशुभस्योपपद्यत इत्यादिशास्त्रादि
ति भाव । ब्रह्मज्ञम्मन्याना पक्षमवलम्ब्येयमुक्तिर्द्रष्टव्या । ते
तदभिमानेन यथेष्टाचरणे प्रवृत्तिदर्शनात् । तदुदाहरणं तु—ब्रह्मै

वेदविदो वदन्ति तस्मान्न मे सखि पराऽपरभर्तृबुद्धिः ॥
ा निजवरे सदृशोऽनुरागो व्यर्थ किमर्थमसतीति कदर्थ
दि । यद्वा, स्त्रीणां स्वधर्म इति यत् त्वयोक्तमेतदुपदेशपदे
। एतदुपदेशविषयो भवानेवाऽतो न वयमुपदेशनीया. ।
कुत उपदेशविषयत्वमित्याशङ्क्य सौ दर्यमाधुर्यादिगुण
कृतस्यास्मच्चित्ताकर्षकस्य तवैतन्निधत्वमेवास्मद्धर्मनाशे प्र-
ाति भावः । यद्वा, इति यत् त्वयोक्त तदस्माक मनसि न
। यतस्त्व धर्मविन्न तु तदनुष्ठाता । यो यस्य धर्मस्यानु
भवति, केवल धर्म जानाति, न तद्वाक्यात् कस्यचित्
धर्मे प्रवृत्तिर्भवति । अत. काचिन्महाभागा पातिव्रत्य
ानपरा योषिद्द्वाराऽस्मानुपदिशेच्चेत् तर्ह्यस्म मनसि तद्
विशेदत किमर्थ जल्पसीति भाव. । अस्मद्वाक्यमेतासा
ाशत्विति यदि तवाग्रहस्तर्ह्येतदुपदेशपदे गुरौ त्वय्यस्तु । तथा-
ाना यथा मोहिनीरूप धृत तथा त्वमपि स्त्रीरूपमादाय
चर, ततोऽस्मानुपदिशेति गुरुणानुष्ठिते कर्मणि शिष्यभूताना
ापि प्रवृत्ति' सौकर्येण भविष्यतीति भावः । नन्वनुष्ठा
दर्शयामि, पर तु किं कर्तव्य ? स्त्रीत्व नास्ति ममेतिचेत्
॥ ईश इति ॥ सर्वकलासमर्थे त्वयि स्त्रीभावोऽपि न दुर्घट
ः ॥ ननु कपटेन गृहीतस्त्रीभावस्य मम पाणिग्रहीतुरल
कथ पातिव्रत्यधर्मानुष्ठानमिति चेत् तत्राहु' ॥ प्रेष्ठो भ
स्वभावत एव प्रियो मनोहरात्मा च । तथाच यथा मोहिन्या
ा कपटस्त्रीभाव, स्वाभाविकस्त्रीभावा परमप्रियामुमा विहाय
ाम परमजितेन्द्रियोऽपि श्रीरुद्रस्तद्ग्रहणायाधावत्, तथा
रसौ दर्यवति त्वयि कपटेनापि गृहीतस्त्रीभावे जान तोऽपि
स्वस्वदारान् परित्यज्य त्वद्ग्रहणाय धाविष्यन्त्यऽतो न

पतिदौर्लभ्यामिति भाव । अनेनाहो विधात्रा धर्मविनाशायैव र
रचितोऽसि । पुरुषत्वे स्त्रीणां धर्मं नाशयसि, गृहीतस्त्रीभावे पुरु
षाणां तन्नाशयिष्यसि । धर्ममनुष्ठातुं तु त्वं कदापि न समर्थोऽसि
यथेदानीं पुरुषधर्ममेकपत्नीव्रतलक्षणमनुष्ठातुमशक्तो, बह्वीनां स्व
स्मिन्नासक्तत्वात् । तथा गृहीतस्त्रीभावेऽप्यसंख्यातपुरुषाणामा
सक्तिजनकत्वात् । तस्मादनुष्ठाय उपदेष्टुमशक्तस्त्वं किमर्थं वृथ
कण्ठशोषणाय प्रवृत्तोऽसीत्यपि ध्वनितम् । यद्वा धर्मविदा त्वय
इति यदुक्तमेतदुपदेशपदे त्वयि एवमस्तु, त्वदङ्गेष्वेव जीर्णं भवतु
ग्राहकाभावात् । अहो ज्ञातमस्माभिर्नवीन धर्मवित्त्वं त्वया सम्पा
दितमत शिष्या सम्पादनीया । यथोक्तधर्मश्रोपदेष्टृत्व इ
तव महत्युत्कण्ठा वर्त्तते । ततोऽस्मानेवमुपदेष्टुं प्रवृत्तोऽसि । परन्तु
वयं त्वां गुरुं कर्तुं समागता, अत. किमर्थमपात्रदानात् स्वधनं ना
शयसि । अप्रतिपित्सितमर्थं प्रतिपादयन्ननवधेयवचनो भवति । त
थाच धर्मविद् यद्यपि जातोऽसि, तथाप्यधिकारानधिकारविवेकले
शनापि विधुरोऽस्यऽत. सम्प्रत्येतत् त्वयि तिष्ठतु । गुरोः सकाशा
यथोक्तविवेकमपि लब्ध्वैतदधिकारलाभं सुखेनोपदेशं करिष्यसी
भाव । यत्तरत्नमीश ॥ यथोक्तोपदेशधारणेऽधिकारस्वीकारेऽधि
कारसम्पादने च समर्थ । भवसस्तर्हि किमर्थमागता इतिचेत् त
त्राहु ॥ तनुभृता सर्वेषां चतुर्दशभुवनस्थानां गौ दर्यादिविशि
विग्रहवतां मध्ये भवान् मनोहरस्वरूपोऽतोऽस्माकं प्रेष्ठ' । तथा
त्वयि रमणबुद्ध्या समागता वयमतो न यथोक्तोपदेशार्हा इ
भाव ॥ मानिनीपक्षे, पत्याद्यनुवृत्तिलक्षण. स्त्रीणां स्वधर्म इति त्व
योक्तम् एतदुपदेशकर्तरि समर्थे त्वय्येवमस्तु । सर्वदैवमव त्व
वयमुपदेशनीया । धर्मविदेत्यनेन अहा ज्ञातम् अद्यास्माभिः— त
धर्मविदसीति सूचितम् । यान्य च वयमुपदेशकर्तृत्वं तव, यत स्व

नकृत' शुभपथ्येव मवर्स ते सज्जनैरित्याशयेनाहु ॥ मेष्ट
यान् मेमविषयो यता बन्धु. । यथाक्तोपदेशकर्तृत्वाद्
अत आत्मा स्वात्मतुल्य । तथाच, क सत्यभर्ता, श्रुश्रूष
, को वा कपटभर्तसादितिरेकवतीनाम अस्माकमग्रे स्व-
नोद्घाटनीयमिति भावः । यद्वा इति यत त्वयोक्तमेतदेव-
दे त्वय्यऽस्तु । त्वमपि स्वधर्ममाश्रित्य तिष्ठ, न त्वस्माक
धर्म नाशयति भाव । यतस्त्वमीशो नाशनरक्षणयोः
यदि तुमदभिस्नेहवतीना न स धर्म., कपटपूर्वकत्वादिति
॥ मेष्ट इति ॥ तनुभृता सर्वेषा माणिना भवान् आत्मवत
तः सर्वेषा हितैषी । तथाच सर्वेषा तनुभृता यथा त्वयि
ाऽस्माकमप्यतो विशेषमीतिभ्रमादस्मासु दोषमारोप्या
नाशयितुमयोग्योऽसीति भाव. ॥
ृत्तिपक्षे, एव साक्षाद्ब्रह्मप्रतिपादकश्रुतिभि. स्वस्य ब्रह्म
वयोऽभिहित इदानीम्, इ द्रो यातोऽवसितस्य राजा, अ
दिव इत्यादिका श्रुतय. स्वाभिमाय ब्रह्मण्यावदयन्ति ॥
॥ यत् खीसगर्भिकाणा श्रुतीनामपि इन्द्रादिमतिपादिकानाम
द्राद्यनुवृत्तिस्तात्पर्येण तत्र मवृत्ति स्वयम इति धर्मविदा
, एतदेव त्वय्यस्तु । यत उपदिश्यमानानामपि इन्द्रादीना
ष्ठाने, यत ईश्वरे सर्वकारणभूते । यतश्च भवान् मष्टत्वात
सर्वेषामपि इन्द्रादीनामात्मा तद्वत् धुस्तत्सम्ब धीन्द्रादावग्रह-
तथाच किमपि विकारजात मतिपादय स श्रुतय. सवा-
ूत सर्वात्मान सर्वस्वरूप परमात्मान तमेव मतिपादयन्ति ।
। यत पदमामनन्तीत्यादिश्रुतेरिति भाव. ॥ ३२ ॥
मार्गे मवृत्ता वय मशस्या, न तूपालम्भयोग्या इत्याशयेन
र मदर्शयन्ति ॥

कुर्वन्ति हि त्वयि रतिं कुशला स्व आत्म-
न्नित्यप्रिये पतिसुतादिभिरार्तिदैः किम् ॥
तन्न प्रसीद परमेश्वर मा स्म छिन्द्या-
दाशा धृता त्वयि चिरादरविन्दनेत्र ! ॥ ३३

कुर्वन्तीति ॥ कुशला कर्तव्याकर्तव्यादिविवेकवन्त:, कि
प्रजया करिष्यामो येषा नोऽयमात्मा लोक इत्यादिशास्त्रतत्त्वविद
पुरुषगौरेया नारदादयो, योषिद्वरा गार्गीसुलभाद्याश्च त्वयि र
कुर्वन्ति । यत , स्वे स्वस्वरूपभूते आत्मनि, अत एव नित्यप्रिये
अन्यत् सर्व यदा स्वात्माऽनुकूल भवति तदा प्रिय भवति, न
सर्वदा । स्वात्मा तु सर्वदैव प्रिय' ।तथाचैवम्भूते त्वय्येव रतिरुचि
ता । तत्सस्थोऽमृतत्वमेति, यदात्मरतिरेव स्यादात्मतृप्तश्च मानव
* आत्मयेव च स तुष्टस्तस्य कार्य न विद्यते * इत्यादिशा
स्त्रात् । अत. पतिसुतादिभि. कि मोक्षप्रतिब धकै:, किं प्रयोज
नम् । ब धवो दृढब धनम् * इत्युक्तत्वात् । मत्युतार्तिदै सम्प्रा
वियोगादिना ज मादिसस्मृतिचक्रानिक्षेपणादिना चाऽऽर्तिप्रदाय
कैः । ये हि सस्पर्शजा भोगा दु'खयोनय एव ते * इत्यादिशा
स्त्रात् । एव यथोक्तनिर्दिष्टत्वमुपपाद्य पूर्वदिक्स्था. प्रार्थयन्ते
तदिति ॥ यस्मात् पतिपुत्राद्यनुवृत्तिर्निन्दिता, त्वदनुवृत्तिर्विहित
सदाचारप्राप्ता चाऽतोऽस्माभिर्योग्यमेव कृतम् । तस्मान्नोऽस्मा
प्रति प्रसीद । ननु मयि प्रसन्ने किं भवतीति चेत् तत्राहुः ॥
परमेश्वर' ब्रह्माद्यधीश्वर त्वयि प्रसन्ने पुरुषार्थचतुष्टयमपि सिद्ध्य
ति । अकाम. सर्वकामो वा मोक्षकाम उदारधीः * तीव्रेण भक्ति
योगेन यजेत पुरुष परम् * इत्युक्तत्वात् । ननु भवतु, प्रसन्नोऽ

मोक्ष ददामीति चेद्, न वय सम्प्रति मोक्षकामा इत्याशयेन
मा स्मेति ॥ चिराद् रामाऽवतारादारभ्य त्वयि धृताम्
: सह रमण करिष्यतीत्येव रूपाम् आशा भवान् मा च्छि-
आशापूर्तिरेव प्रभुभिः क्रियते, न तु तच्छेद इति प्रसिद्धि-
— स्मेति ॥ ननु सर्वात्मभाव जानतीना युष्माक स्व-
। मया रमणेन सन्तोषः किमिति न भवतीतिचेत् तत्राहु ॥
न्दनेत्र ॥ अनावृतब्रह्मात्मभावेन तुच्छीकृतकोटिकाम
पुण्डरीकाक्षेण भगवता त्वया रमणाभिकाङ्क्षावत्यो वय,
ब्रह्मात्मभावैर्मलमूत्रादिविग्रहैः स्वपतिभिः । अत एत
वास्मदाशापूर्तिर्विधेयेति भाव । यद्वा, अरविन्दनेत्र ! श्री
विग्रहदर्शनजन्यैतद्विग्रहसङ्गमाऽऽशापूर्तिमेतद्विग्रहेणैव कर्तु
रीति सम्बोधनाशय. ॥ वरदेश्वर इति पाठे वरदानाभी
श्रीरामचन्द्रात्मना वने स्थितस्य तव दर्शनमात्रेणैव वर
त्वादिदानी तत्साफल्यमपेक्षितमिति भावः ॥ अनभिज्ञ
ोक्तात्मज्ञपक्षमवलम्ब्य यदुक्त तत्र सदाचारप्रमाणमाहु ॥
त ॥ कुशला मनीषिणो नित्यप्रिये स्वात्मभूते त्वय्येव
िन्ति, पतिपुत्रादिभिरार्तिदैः किमिति विचार्य्य, तव त-
प्रसीद । यतस्त्व परमसमर्थ, त्वत्प्रसादो न निष्फल इति
वरदेश्वर इति पाठे, मयेमा रस्यथ क्षपा * इति त्वया वरो
सार्थक कर्तु समर्थ इति भाव । तस्मादाशाच्छेदोऽस्मन्त
इत्याहुः ॥ मा स्मेति ॥ चिराद्, बालभावमारभ्य त्वयि
ा भवान् मा च्छिन्द्याव । हे अरविन्दनेत्र ! परमसुन्दर ।
ोकोत्तरसौन्दर्यादिविशिष्टो भवानेव अस्मदन्त करणे
ऽऽशामुत्पादितवान् । अतः स्वेनोत्पादिता स्वगुणैर्वर्द्धिता
रयितु योग्यामाशालक्षणां लता फलकाले कर्णकठोरो-

स्त्यादिकुठारेण च्छेत्तु नार्हसि ।यतो, विषवृक्षोऽपि संवर्द्ध्य स्व
छेत्तुमसाम्प्रतम् * इति न्यायजानास्येवेति भाव । स्वस्मिन्नात
त्वोच्छेपेण यदि त्वं भूतिकामस्तर्ह्याशापूर्तिरूपमस्मत्पूजनमव
कुरु । आत्मज्ञमर्च्चयेद् भूतिकाम इति श्रुतेरिति ध्वनितम्
यद्वा, य एतस्मिन् महाभागा * इत्यादिगर्गोक्तिमनुस्मृत्याहु ॥ कु
र्वन्तीति ॥कुशला महद्भाग्यलब्धसारासारविवेकास्त्वयि रतिं कु
न्ति । यत स्वीये आत्मनि अन्तःकरणे नित्यप्रिये, यद्वा नित
प्रिये स्वस्मिन् परस्मिंश्च नित्यप्रिये त्वयि ।अतस्तद्विपरीते स्वी
आत्मनि चार्तिदैर्दु खप्रदे पत्यादिभिरस्माकमपि कुशलाना
प्रयोजनम् । तत् तस्मान्न. प्रसीद । त्वयि चिराद् धृतामाशां भ
वान् मा च्छिन्द्यात् । सर्वं परित्यज्य त्वदाशया जीवाम' । त
च्छेदे त्वदवलम्बनाभावात् सद्य एव मरिष्याम इति भाव. । न
भवतीना नाद्यापि तथाविधप्रमातिरेको दृश्यत इत्यत एव ब्रवी
मीति चेत् तत्राहु ॥ हे अरविन्दनेत्र ' अहो ज्ञातमस्माभि , भ
सखे' रजनीय, भवाॅश्चारविन्दनेत्र. । अतो मुकुलितनेत्रकमल
त्वादस्माक प्रेम्णः परा काष्ठा न पश्यसीति सनर्म व्यङ्ग्यम्
मानिनीपक्षे, ननु सर्वेषा प्राणिनामहं प्रेष्ठ इति यदि भवत्यो ज
नन्ति तर्हि स्वाधिकारानुरूपां रतिं कुतो न कुर्वन्तीत्याशङ्क्याहु'
कुर्वन्तीति ॥ कुशला. स्वधर्मनिपुणा सात्त्व्य , आर्तिदे — द
अवखण्डने। दु'खच्छेदकै पत्यादिभिर्हेतुभूतै स्वीये गृहादौ आत्म
नि च नित्यप्रिये सति, त्वयि रतिं रमणबुद्धिं कुर्वा त किम् ?
अपि तु न कुर्वन्तीत्यर्थः । तत् तस्मान्न प्रसीद । हे परमेश्वर
व्रजाधीश्वरपुत्र ! त्वां त्वत्प्रसाद प्रार्थयाम इति भाव ।पाठा तरे,
वाञ्छितप्रद । प्रसादमेवाहु' ॥ चिराद् वयमत्र, मा आस्म =
तिष्ठाम ।लटि रूप छा दसम्। शीघ्रं गृहान् ग तुमनुजानीहीत्यर्थ

कालमारभ्य ममाऽऽशा वर्ततेऽत एव न वाच्यमिति चेद्
। आशामिति ॥ चिराद् त्वयि धृता स्थिताम् । धृङ् अ
अस्मत्सङ्काशाम्, अत. पर भवान् छिद्याद् । यतो, हे
नेत्र ! ॥ कमलवद्विशालनेत्रस्य प्रसह्यमस्माक स्वधर्मनि-
यतोऽस्य ताऽसाध्येऽर्थे प्रार्थना नोचितेति भावः । यद्वा
स्वीये आत्मरन्निसमियेऽपि त्वयि पसादिभिर्दु खनिवा-
ते रति कुर्वी त किम्। अपि तु न कुर्वी त। समानमन्यत्।
ध्वी बलयुता भ्रातृमती भर्तृप्रिया बहु * असाध्या सा
र्जनीयाऽपमृत्युदेत्युक्तमसा यालक्षण स्वास्मिन् सूचयन्त्य
कुर्वतीति ॥ अहो कुशला अस्मदाद्याः पत्यादिभिः
आत्मनि देहादौ निसप्रिये तत्करणीयप्रीतिविषये सति
त किम् ?। तत्रापि आर्तिदे.॥पापसम्भावनयापि परम
. । समानम यत् । यद्वा, तिष्ठतु पतित्वविचार', प्रीतिवि
अस्माक तु सर्वतो विरक्ति सम्पाद्यात्मरति. कर्तव्येति
त्तिदर्शनेन सम्प्रति मनीषा वर्तत इत्याशयेनाहु. ॥ कुर्व
तु अपि इति च्छेदः । अयि, हे सौम्य ' हि प्रसिद्धम् ।
तु स्वे वस्तुत. स्वरूपभूते आत्मनि निसप्रिये रति कुर्व
तु तद्विपरीते देहादौ । नोऽस्माकम् आर्तिदैरपसादिभिः
जनमिति विचार्य्य कथ रति कुर्वतीत्यपेक्षायामाहुः ॥
॥ यत सर्व दु खस्वरूप तस्माद्, हे परमेश्वर ! त्व
प्रसन्नो भूत्वा वय विषयाऽऽशया त्वयि मा आस्म ।
भूता वय न स्थितास्तामाशा, हे अरविन्दनेत्र ' भवान्
। हे ईश्वर परब्रह्मविषया मा प्रमा छिद्यादिति वा ।
अरवि दनेत्र ! परमेश्वरविषयिणी मा प्रमा चिराद् काल-
भृता स्वीकृता त्रिपयाशा छिन्द्यात्। ततस्त्वयि, आस्म त्व

भवामेत्येवम्प्रकारेण रतिं कुर्वन्तीत्यर्थः । यद्वा, भोः
मिणे, नेय परदारेषु रत्याशा शोभना । कुशलास्तु स्व-
दावपि रतिं विहाय स्वात्मन्येव रतिं कुर्वन्तीत्याशयेना
ीतीति ॥ तस्मात् त्वमपि प्रसीद, किमर्थं ग्लायसीति
रसादे सर्वदुःखाना हानिरस्योपजायते ॥ इति प्रसिद्ध्या
ति, हे परम ! हे अरविन्दनेत्र ! ईश्वर ! परमा चिराव
त्रस्थिता सर्वदुःखनिदानभूतामाशा छिन्द्यादित्यर्थः ॥
ोत्तिपक्षे, प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु
तच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि
पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् ॥ एतद्यो
त गुहाया सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ तद्वि
रिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ भिद्यते
थरित्याद्या श्रुतयो वैराग्यादिसाधनसम्पन्नास्त्वय्येवात्मनि
त्रस्वरूपे प्रत्यगभिन्ने, यतो निरुप्रिये रतिं, आर्तिप्रदै
र्ने किं प्रयोजनमिति विचार्य, तस्माद् हे परमेश्वर !
ादिकालादारभ्य त्वयि धृतामाशामभिप्राय कश्चिदपि मा
ाछेदनपर परमेश्वरेण त्वया दण्डनीय इति सम्बोधना
। यद्वा, तद् त स्थितेन त्वया तच्छेदनाय स न प्रेरणीय
ाहु ॥ हे अरविन्दनेत्र ! सर्वहृत्कमलप्रकाशन ! इति ॥ ३ ३ ।
पि वनदर्शनार्थमागतास्तस्य च जातत्वादित पर प्रति
तत्राऽऽप्याहु ।

चेत्त सुखेन भवताऽपहृत गृहेषु
ान्निर्विशत्युत करावपि गृह्यकृत्ये ॥
ादौ पद न चलतस्तव पादमूलाद्

ाम कथ व्रजमथो करवाम किं वा ॥ ३४ ॥

ति ॥ गृहादिषु यच्चित्त सुखेन निर्विशति तत्त्वयाऽपहृ
वमग्रेऽपि । यद्वा, तदपहारे न भगवत' प्रयास इत्याशयेन
सुखेनाऽऽन दस्वरूपेण। तथाच साक्षादान दस्वरूपे त्वयि
थान चित्त गृहेऽपि न निर्विशति दूरेवनदर्शनादौ तत्पवे
॥ करावपि इ ोचितकृत्ये न निविशत । दूरे पुष्पफला
। न हि तस्करहृत॰ कस्मिश्चित् कर्मणि केनचिन्नियुज्य
ात । तथाच तव पादमूलात् तत्समीपात् पादौ पद न
नाऽ यत्र गच्छत' । तत्र पादमूलादित्यनेन त्वत्पादसा
 तदा सर्वत्र ग तु शक्ताविति सूचितम् । अतो गमन
ावादव्रजकथयाम । ननु भवतीना पद्भ्या गमनसामर्थ्य
त् तर्हि शकटादिना प्रेषयिष्यामीति चेत् तत्राहु' ॥ कर
। अथो अथ तत्र गत्वा कि करवाम तत्तद्व्यापार
ादेस्त्वयाऽपहृततत्वादिति भाव ॥ अनभिज्ञापक्षे, त
ोभाऽऽशादिदर्शनार्थमागता, नापि तव सङ्गमार्थमपि तु
त्वच्चित्त ग्रहीतुमागता इति नर्म व्यञ्जय स आहु ॥
ाकमपहृतम् ॥ केनेति चेत् तत्राहु ॥ भवता ॥ चोर
ना। ननु भवत्योऽत्र त मिथ्यावादि य । वनस्थेन हि मया
रहितेन कथमपहृतमिति चेत तत्राहु ॥ सुखेनाऽना
वेणुरवादिभ्रूसन्द्भावे तदपहरणे को वा तव प्रयास इति
 चेद् स्वल्पम्, एदपहारेण सर्वस्यापि गृहादेर्लुण्ठितत्वाद्
ाहु ॥ यच्चित्त गृहेषु सर्वेषु बाह्येषु इ द्रियरूपेषु च
ण विशात तदपहृतमित्यर्थ । अत करावपि यौ गृहकृ
र्विशात । उनेत्यनेन नेत्रादीनामपि सग्रह॰ । ननु सम्प्रति

य' पश्वो वा दास्यामिति चेत् तत्राहु• ॥ पादौ तद्विन
मूलात् पद न चलतः । धूनस्य चोरस्य त्यागो न न्याय
रनितम् । अथा अतो व्रज कथ याम, गत्वा च कि कर
वैसावनाचित्तरूपधनाभावादिसर्थ । यद्वा, कि वा करवा
ताद सर्वस्यापहारात् । चौर भव त प्राप्यापि तदादाद
तु, नेतु, राजाग्रे, आक्रोशनाय न तु चाशक्तत्वात् । स्त
नत्रोऽलौकिकचौरे किकरवामेति भाव । यद्वा, सुखरूपे
' चित्तादेरपहृतत्वाद् गृहादीनि ज्वल तु, सम्रुद्धयन्तु, कि
तैरनस्त ग्रामाप्यसदग्र नाच्चारणीयमितिभाव'॥माननि
नु तिष्ठतु वाद', सप्रत्येव भवत्व' समागता रात्राव
मालर्गमिष्यथेति चेत् तत्राहु ॥ चित्तमिति ॥ सत्यमु
थापि गृहेषु भवता जायमानेन सुखेन चित्तमस्माकमपह
स्मादृगृहकृत्येषु निर्विशति करावपि तत्र निर्विशत' । न
याप्यतिसुकुमारत्वात् पदमपि गन्तुमशक्ताभ्या पद्भ्य
मष्यथेति चेत्तत्राहु• ॥ पादौ तव पादमूलात् कथ पद
किन्तु चलत एव । तत कथ व्रज न याम । अत्र कि
कि करवाम । यद्वा, यद्यपि पादौ पदमपि ग तु न शक्तं
तव पादमूलात् कथञ्चिद् व्रजमेव शनै' शनैर्याम । अ
त्र स्थित्वा कि करवामेत्यर्थः ॥

तद्वितिपक्षे, ननु सर्वासा श्रुतीना ब्रह्मपरत्वे कर्मणस्तत्वा
त्वात्तदनुष्ठानादेर्वैयर्थ्य प्राप्तमित्याशङ्का, तत्त्वज्ञानात '
माशङ्कते ? तदुत्तर वा ? नाद्य । यत्र तु द्वैतमिव भव
इतर पश्यतीत्यादिना ससारदशाया क्रियाकारकादे•
प्रधानात् तद्वैयर्थ्याऽनवगमात । न द्वितीय• । यत्र त्व
ात्मैवाभूत तद केन क पश्येदित्यादिना तदुत्तर तद्वै

वादिखाशयेनाहु' ॥ चित्तमिति ॥ सुखरूपेण भवता
ाऽपहृत सच्चिदान दघने मसगभिन्ने परमात्मनि चित्त
न तदा गृहेषु बाह्येष्वभ्य तरेषु च न निर्विशति । अत
वपि युष्मत्कुले न निर्विशत. । पादौ पदमपि न चलत ।
र्वेन्द्रियव्यापारानिवृत्त्या तत्त्वविद. कर्माधिकाराभावात्
। कर्मानुष्ठानादर्वैयर्थ्ये नास्ति दोष. । नैव तस्य कृतेना
कृतेनेह कश्चन ❋ नचास्य सर्वभूतेषु कश्चिदर्थव्यपाश्र
यादिशास्त्रादिति भाव । अतस्तव पादमूलाद् वय व्रज
। । कर्मकाण्डश्रुत्यानुगुण्य कथ भजाम । तासामप्यस्म
त्वाव । गत्वा च कि करवाम । क्रियाकारकादिप्रतिषेध-
ामस्माक तदानुगुण्यासम्भवादिति भाव ॥ ३८ ॥

दक्षिणदिग्गता उक्ता मार्थय ते ॥

सेञ्चाङ्ग ! नरत्वदधराऽमृतपूरकण
हासावलोककलगीतजहृच्छयाग्निम् ॥
नो चेद् वय विरहाजाग्न्युपयुक्तदेहा
ध्यानेन याम पदयो पदयो सख ! ते ॥ ३५ ॥

ञ्चेति ॥ अङ्ग ! हे भगवन्' अस्मद्दृच्छयाग्नि सिञ्च, न तु
त्वद्विषयकामस्य परमसुखरूपत्वात । यतस्त्वयैवोत्पादित
। हासेति ॥ तव योऽय हासपूर्वकोऽवलोक कलगीत च
तातो यो हृच्छय काम स एवाग्नि. । तत्र हास काम-
अवलोकः स धुक्षणकर्त्ता, गीत वायुरिव । तत्रापि कल-
ोतो वायुः । सिञ्चन च न वा घृतादिना, स्वर्गस्थाऽमृ
ास्थसुधया वा सम्भवति । तेषा यथाकथञ्चिदुदरमवश-

ामप्यनभिलषितत्वेन हृदये प्रवेशायोगादि याशयेनाहुः
ऽमृतपूरकेण ॥ अलौकिकेन पूरकेणाऽपि सिञ्चनोक्त्य
ने परममहत्त्वं सूचितम् । सिञ्चनप्रार्थनया भगवद्विषय
ासमज्जीवनं जठराग्निवदिति भणितम् । अन्यथा स्वरू
, तदावेदयन्ति ॥ नो चेदिति ॥ सिञ्चनेन यदि न जीवयसि
हजाग्निना उपयुक्तदेहा दग्धशरीरास्ते पदयोः पदवीम्
योगिवद् याम प्राप्नुयाम । उपयुक्तपदेन, त्वयोपभोग्य
यथोक्ताग्निनोपयुक्तत्वमयुक्तमिति भणितम् । ननु सिञ्च
द्धः कामाग्निर्दाहको भविष्यतीत्याशङ्कानिरासाय विरहा
ुक्तम् । तथाचाऽतिवृद्धोऽपि जाठराग्निर्यथेष्टभोजन
ते न दहति, अनशनादिना तदलाभात्तु दहति । तथा हृ
रपि स्वभोग्यालाभे तदाशानिवृत्त्या विरहाग्निरूपेण
दहतीति भावः । यद्यपि तव प्राप्तौ नास्त्यस्माकं किं
प्रतिबन्धकं तथापि भगवदुपभुक्तदेहानां भगवत्प्राप्तिरभि
तद्विपर्यये महद् दुःखमतः सखिरूपेणावतीर्णस्य तव यथा
ारथपूर्तिर्भवेत् तथाऽनुष्ठानं योग्यमिति सूचयन्त्यः सम्बो
। हे सखे इति ॥ अथवा यद्यप्यस्मन्मरणे तव नास्ति का
स्तथापि सखित्वात् पश्चात्तापस्तु भविष्यसीति सम्बोधना
॥ अनभिज्ञापक्षे, अनेन निर्वस्त्राङ्गदर्शनार्थं यथा वस्त्राहरण
रब्धा, तथा निर्लज्जवचनश्रवणार्थमिय लीला समा
यज्ञाय विस्पष्टं प्रार्थयन्ते ॥ सिञ्चेति ॥ आदौ क्रियापद
त्कण्ठाधिक्यं सूचयन्ति ॥

प्रिय ! नः कामाऽग्निं सिञ्च । निर्वापय । यतस्तव हासा
लगीताभ्यां जातश्चादीप्तः । तथाच अस्मद्हृदयशयमेन
हासावलोकाभ्यां कलगीतलक्षणेन मथानदण्डेन प्रबोध्य

शै' प्रदीप्य तत्रास्मान् अस्मत्प्राणान् दग्धुमत्रकान्तोऽस्मि ।
ममतस्तज्जनितपापाद् बिभेषि चेत् तर्हि त त्रिापय । यनै
प्रदीप्यते तेनैव पश्चात्तापेन झगिति यदि निर्वाप्यते तर्हि
ताप निवर्तते इति भाव. । ननु सम्प्रति ममान्तिके जल
नाभावात् कथ भिञ्चामि तथा चेद् भवतीनामाग्रहस्तर्हि
भिधौ चलनीयमिति सोपहासमाशङ्क्याहु ॥ अमृतेन, त
परममहत्वात् तत्पूरकेण । स्वार्थे कन् । ननु जन्मापि
न तत्राऽमृत कुतस्त्य; तदुदिन्दोरपि दुर्लभत्वात् तत्पूर
ाशङ्क्य कथमस्मज्जीवनसाधन गोपायसि " प्रसक्षोप
ास्य गोपनाऽयोगादिसाशयेनाहु' ॥ त्वदधरेति ॥ अहा
ऽमृतसमुद्रेणापि तच्छा तिरतोऽस्तु तदोर्लभ्य, येनाऽमृतेन
त्तत तव मुखचन्द्र एवास्तऽतो नास्ति तव कोऽप्यायास
। अनेन ज्वालनोपशमनयोरुभयोरपि स्वायत्तत्वादुभ
क्रीडोचिता, न त्वेकविधा । दुर्लीलाकतृषु राजकुमारेष्वपि
नादिसपि ध्वनितम् । हृच्छयाग्नारिसनेना तरोऽय दाहा
गविशेषस्त्वदधराख्यपात्रविशेष मुखे निधाय पीतेना
ासमर्थेन तत्रस्थाऽमृतपूरकेणोपशान्ति गमिष्यति, न तु
ोटिभिरभ्युपायैरिति वनितम् । ननु मम स्वाभाविक
भैर्यदि युवसो ज्वलेयुस्तर्हि कुत्र काति वा स्वाधराऽमृत
चकित्स्या इति चेत तत्राहु' ॥ नो चेदिति ॥ यदि न
तर्हायमेकोऽग्निस्तेन शोपितदेहास्तथा विरहजाग्निना दग्ध
। पदयो पदवी साक्षि यमधुनैव ध्यानेन प्राप्नुयाम ।
त सा गतिरिति न्यायात् प्राणान् विहायाऽपि मेष्टसन्निधान
ाति स्वप्राणेभ्योऽपि स्नेहाधिक्य सूचय त्य सबाधय
: सखे इति ॥ यद्वा, पूर्वज म यऽकृततपस्का वयमतो वि

ा माणात् जुहुमः । ततस्तत्र पादयो पदवीं मार्ग प्राप्नुया-
ा भविष्याम । ततोऽनन्तोऽपि तव पादौ अस्मत्सन्ते
तां, न तु भूमौ । ततश्च त्वत्पादभारेणैवोपरता तद्दुःख
वच सिद्धमनोरथा भविष्यामः । त्व चानिच्छन्नप्यस्मत्
ं सुख माप्नुवन्नपि स्त्रीवधानुतापमेव भूयात प्राप्स्यसि ।
सखीरस्माँस्त्वमेव सतापयसि चेत् तर्हि वयम् अपि त्वा
ाव कथ नानुतापयामः । पर तु प्रेमहतकस्तदनुतापड् खम
गुणीकृत्य अस्मभ्यमेव दास्यते इति जानीथ । किं कु
क दग्धललाटमेवविधमेव विधात्रा सृष्टम् । तस्माद् भो ।
ादर्शन कृपासागर स्वानुतापवल्लीबीज किमर्थ वपसि,
फलभोगाभागिनीरस्माँश्च करोषि । मुक्त्वाऽसदाग्रहम
अस्मानित्याशय । यद्वा, अकर्त्तव्यप्रार्थनामाकर्ण्यापि
लक्ष्याहु' ॥ नो चेद्वयमिति ॥ नन्वेतावत्पर्य त कामा
कथ न दग्धा इत्याशङ्क्य तत्सिञ्चनाऽऽशया सञ्जीविता
पर तद्विरहत्या सोऽग्निर्विरहाजाऽग्निश्चेत्यग्निद्वयसत्त्वे
ोऽभमिति भावः । नन्वस्तु, तेन मम का हानिरिति चेत्
। ध्यानेनेति ॥ तथाच निरवधि दु'ख दातु प्रवृत्तोऽग्नि ।
ख तुभ्य दातु नास्माक सामर्थ्यम् । अस्मद्विरहेण तव
याव । सयोगस्य तादृशादु खजनकत्वेऽप्यस्मिञ्ज मनि
भत्वादिद शरीर दग्ध्वा तव पादयोर्मार्गभाव याम । तेन
स्वसयोगेनैरत्रित्र तव दु ख दास्याम इति भावः । त
त्सपरदु खप्रदान न सख्यधर्म इत्याशयेनाहु ॥ हे सखे
द्वा, नन्विदानीमिद दुर्घट ज मान्तरे स्यादित्याशङ्क्याहु' ॥
द दुर्घटमेवेति चेत् तर्हि ध्यानेनापि ते पदयो सान्नि य न
ता विरहजाग्नरेवोपयुक्ता उचिता, न तु सयोगाऽमृत

देहा यासां ता. । अधुनैव ज मा तरेऽपि विरहस्यैव नि-
ति भाव । तस्मात्त्वया सम्पादित सख्य त्वयैव सम्पन्नमिति
ाशयः ॥ मानिनीपक्षे, अङ्ग ! हे लम्पट ! नोऽस्माक सह-
ादिना जातो यस्तव कामानलस्त त्वदधराऽमृतपूरकेणैव
ादृशाग्न्युपशामकतादृशाऽमृतदानयोग्याया. कस्याश्चिद-
भावात् । इष्टे मधुरादिवस्तुनि दुर्भिक्षे दृष्टे सति स्वोष्ठपुटी
था लिह्यते तद्वदिति नर्मव्यञ्जनाम् । यद्वा, नोऽस्मत्तस्त्व-
मेवाधाराऽमृतपूरकेणेत्यर्थ । बलात्कारमालक्ष्याहु' ॥ नो
ादस्मदधराऽमृतपानाय प्रवर्त्स्यसे चेत् तर्हि वय स्वपति-
रुपयुक्तदेहा भवेम, म्रियेमहि । तथापि ध्याने चि तने-
दयोर्मार्गमपि, न याम = न यास्याम । आलक्षमख्याद-
माव जानासीति सम्बोधनाशय' ॥
पक्षे, तरति शोकमात्मवित्, ब्रह्मविदाप्नोति पर, नाऽ य
द्यतेऽयनाय इत्यादिश्रुत्या परमपुरुषार्थाऽन यसाधनतत्त्व-
श्रमन्त्वलोकनादिना यथाकथञ्चिदपि जातस्य करुणाऽमृत-
ाषिञ्चनेन वर्द्धनम् उचितमिति प्रार्थ्य ते ॥ सिञ्चेति ॥
परमात्मन् ! नोऽस्माक श्रुतीना हासपूर्वक प्रसन्नतापूर्वकम
= श्रवणपूर्वक मननम् । कलयति सर्वतश्चित्तवृत्तीराकर्षती
तच्च तद् गीत गान = निदि यासन च, ताभ्या जातो
यस्य संसारस्य कामादेर्दाहकत्वादग्निस्त ज्ञानाग्नि त्व
ास्त्रवाङ्मयाऽमृतपूरकेण कृष्णद्वैपायनाद्यात्मना त्व
र्दय । यथा यथोक्ताग्निस्तत्तद्रादिकल्पितकुतर्कजलप्रवाहै
पेत तथा कुर्विसभिप्राय । कृष्णाद्यात्मनाऽवतीर्णस्य भ
वाऽमृतत्वमुक्तम् । प्रपन्नपारिजाताय तोत्त्रवेत्रैकपाणये ॥
य कृष्णाय गीताऽमृतदुहे नम ॥ । जयति पराशरसूनुः

दयनन्दनो व्यासः * यस्यास्यकमलगलित वाङ्मय
त् पिबतीत्यादिना ज्ञानस्याग्निरूपत्वमुक्तं भगवता । यथै
मिद्धोऽग्निर्भस्मसात् कुरुते तथा * ज्ञानाग्निः सर्वकर्मा
सात् कुरुतेऽर्जुन * यस्य सर्वे समारम्भाः कामसङ्कल्प
* ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः * इत्या
सेचनं तेनैव कृतम् । न हि ज्ञानेन सदृशं पावनमिह विद्य
।। ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते * उदाराः सर्व
नी त्वात्मैव मे मतमित्यादि ।। । विपक्षे दोषमाहुः ॥ ना
सिश्चसि चेत्, तर्हि वयं, तत्तद्वाक्यप्रतिपादितेन— श्रुतिषु
न्परमात्मनिरूपणं नास्तीत्यादिरूपेण तव विरहलक्षणा
युक्तदेहा भक्षितस्वरूपा नष्टा भवेम । तथापि ते पदयोः
त्त्व, ध्यानेन याम = तत्राभिप्रायवशो भविष्याम । वस्त्व
वस्य वादिसहस्रैरपि कर्तुमशक्यत्वादिति भावः । यस्मा
यो, सख्य वर्ततेऽतस्तौ कदापि न वियुक्तौ भवत इति
शय ॥ ३५ ॥
तु यद्यपि निःसीमप्रेमवशा भवत्यस्तथापि मर्यादापालनार्थं
न्निगौ स्थित्वैव मदाराधनं कर्तव्यमिति चेत् तत्राहुः

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
दत्तक्षणं क्वचिदरण्यजनप्रियस्य ॥
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग ! (१)
स्थातुं त्वयाऽभिरमिता बत पारयामः ॥ ३६ ॥

इति ॥ हे अम्बुजाक्ष ! यर्हि यत्प्रभृति तव पादतलं वयम्

---

(१) अञ्ज इति पाठान्तरम् ।

ःक्ष्म स्पृष्टवसस्तत्प्रभृति अ यस्य समक्षे स्थातुमपि न पार
शक्नुम. । इत' परं तत्समक्षे स्थिति कोटिनरकखेदादप्य
खेद करोतीति सूचनाय बलेत्युक्तम् । किञ्च, नैनाव माक्रम,
तु त्वयाभिरमिता बाल्यभावमारभ्य त्वया सार्द्धं त्वत्प्रसादात्
मपि लब्धवत्य । अम्बुजम त करणकमलमस्तुते व्याप्नोतीति
क्षः । तथाचा त.करणवृत्तिज्ञस्त्व सन जानन्नपि किमेवमा
रोषीति सम्राधनाशय' । स्वस्य भगवत्पादतलस्पर्शयोग्य
। सूचयति ॥ कचिदरण्यजना प्रिया यस्य । तथाच वय
ण्यजनत्वात् क्वचिदस्माक्स्मेति भाव. । इत' परम यत्र क्वा
प्रातुमशक्ता इत्यत्र हेतुमाहु ॥ रमाया लक्ष्म्या दत्तोत्सव द
नर वा । तदपि क्वचिदेव, न सर्वदा । तथाच रमाया अपि
यार्थ्य दुर्लभ चेद पादतल स्पृष्ट्वाऽ यत्समक्षे स्थातुमस्माक का
रिति भावः । यद्वा, हे अम्बुजाक्ष दृष्ट्यैव तापनिवारक, यथा
रा च.ञ्चलत्व विहायैतत्माप्त तथाऽस्माभिरपि सर्वतश्चाञ्चल्य
ज्य तत्प्राप्तये तदेकनिष्ठतैव सपादनीयेत्याशयेनाहुः ॥
ा इति ॥ किञ्च, अरण्यजनप्रियस्य सर्वसङ्गविनिर्मुक्तेषु वने
रा तवाराधनपरेष्वेव तव प्रीतिदर्शनात् तत्प्रीत्यर्थं तत्साम्य
माकमपि सपादनीयमित्याशय । किञ्च, स्वा ये सर्वदा
ऽभिरमिता अपि जाता. । अ यथा जीवनस्यैव दुर्लभत्वात् ।
द्वयम यत्र ग तु प्रेषयितु च न समुचिता इति भाव. ॥ कचि
इति पाठस्तत्राज्ञ सर्वभावेन स्थ.तुमित्यर्थ । अनभिज्ञापक्षे,
तामाग्नितप्ताना यदि गृहकुलेषु नास्ति शक्तिस्तथापि कुलाङ्गना
ष्माक पतिसान्निधावेव स्थ.तुमुचितमत. स्वपतीनेवोपगच्छत,
वेन कामाग्निमपि भिक्षेयुरिति चेत्तत्राहु. ॥ यर्हीति ॥ हे अम्बु
१ तत्र नेत्रकमलदर्शनक्षणमारभ्यैव वय भ्रमरीभूय स्थिता'

नचक्षूरागेण लब्धचित्तासङ्गादिकाः किमेव ब्रवीषि। चक्षु
म चित्तासङ्गस्ततोऽथ सकल्प * इति रसशास्त्र किं
ते भाव'। तत्राऽपि यर्हि अस्मद्भाग्योदयक्षणे कदाचिदे
दुर्लभे गोवर्द्धनादिकुञ्जप्रदेशे त्वया अभिरमिता निज
नयाभिर्न दत्तवत्यस्तत पादमूलमस्माक्षम करेण सवाहना
चाभ्या वा स्पृष्टवत्यो, यतो रमाया, जातविकरचन, रम
तोत्सवम्। यद्वा, यद्वाञ्छया श्रीर्ललनाऽऽचरत्तप * इति
ना मुखाच्छ्रुतत्वाद् रमाया वैकुण्ठवासि या लक्ष्म्या नारा
या अपि रमणाभिकाङ्क्षिण्या उत्सवदायकम्। तथास्माव
रे, किं चित्रमिति भावः। त्वस्य याग्यत्वेन दुर्लभत्वमाश
अरण्यजना गोपादय एव प्रिया यस्य। यद्वा, रमणीना
कस्य कादाचित्कत्ववर्णनमसङ्गतमित्याशङ्क्याहु ॥ अरण्य
ल द्य प्रिया यस्य। तथाच पुलि द्यादिषु दर्शनादिन
कस्य पादतलस्पर्शोऽस्माक दुर्लभ इति भाव। अहो रमण
विहाय तादृशाना प्रीति प्रयच्छसीत्युपालम्भोऽपि व्यज्यते
अन्यदर्शनमपि न रोचते। तथाच कोऽप्युच्चाटनम त्वत्प्र
दतलमात्रस्पर्श एवेति भाव.। अञ्ज इति पाठे, ननु भे
दि यो व्रज वसथवेति चेत् तत्राहु ॥ अञ्ज. = अनायासेन
त्र बलाद् वसामो, न तु प्रीत्येति भावः ॥ मानिनीपक्षे
र्शादिना कामाग्निमुद्दीपयित्वा सम्प्रत्येव वक्तु प्रवृत्ता
आहु. ॥ यर्हीति ॥ बाल्ये त्वदङ्गस्पर्श कदाचित् कृत
र तु यत्प्रभृति तव पादतल रमणीना दत्तक्षण जात
कथञ्चिदपि कदाचिदपि नाऽस्प्राक्ष्म। यतो वाऽरण्यजन
वानरादिप्रियस्य सत., त्वया कथादिना अभिरमिता अपि
न्यपा श्वश्रूप्रमुखाना समक्ष स्थातु पारयाम। अ यथा

ङ्ष्येमहीति भाव' । अम्बुजवद्विशालनेत्रस्यास्मत्स्वभाव पश्यतो
मार्थनमुचितमिति सम्बोधनाशयः । यद्वा, यदि तवपादतल वय-
माक्ष्म तर्हि तत्मभृति अ यसमक्ष स्थातुमपि न पारयाम ॥
ति खेदे । तथा सति महान् खेदः स्यादिति भाव.। न तु तथा
तमतो महत् कुशलमित्यर्थ. । पादतलस्पर्शमात्रस्य यदा इय
ग तदा त्वयाऽभिरमिताना जायमानस्तु खेदो वाचामप्यगोचर इत्य-
प्रायेण त्वयाभिरमिता इत्युक्तम् । ननु मदङ्गस्पर्शव्रतीना मया-
ऽभिरमिताना प्रतिदिनमानन्दास्वादनपराणा तत्समक्षावस्थाने कि
ाजनमित्याशङ्कानिवृत्त्यर्थमुक्त, रमाया दत्तक्षणम् । तथाचैवविध-
स्य तवगर्वाविश्यम्भावादखर्वगर्ववतीभिरस्माभि सङ्गत स्था-
ासम्भवात् तादृशस्य सुखस्य तथाविधदु खकारणत्वसम्भ-
मेवमिति भाव. । तत्राप्यरण्यजनप्रियस्य रमणविरोधिभावगत-
ाचोभयभ्रष्टत्वसम्पादक तव पादतलस्पर्शादिकमिति भाव ॥

निवृत्तिपक्षे, ननु मया सिक्तोऽपि यथोक्तवादिकल्पितदुस्त
र्वापण यास्यतीति चेत् तत्राहु' ॥ यर्हीति ॥ हे अम्बुजाक्ष
हृत्कमलव्याप्त ' यदा तव प्रसादोदयकाले प्राप्तसाधनसम्पदा-
कारिणा विचारिता वय तव पादतलमस्पाक्ष्म तत्मभृति ना य
क्ष स्थातुमपि पारयाम । ब्रह्मातिरिक्त किमपि पारमार्थिक न
पादयामः । आपाततोऽर्थान्तरप्रतीतावपि अन्तस्तात्पर्येणा-
रत्व नास्तीत्यर्थ । तत्रापि त्वया परमात्मना अभिरमिता त्व-
व सम वय प्राप्ताः । ननु तथापि, यतो वा इमानि भूतानि
न्त इत्यादिश्रुतीना सविशेषपरत्वमेवावसीयते । निर्विशेषस्य
र्थापारस्य जगत्कर्तृत्वाद्यसम्भवादित्याशङ्कानिरासायोक्त—स्व-
मायाया आपातरम्याया महामायाया दत्तक्षण, न तु सर्वत्र
दा च । तथा शाखाग्र यायेन तासा सविशेषे वा, निर्विशेष एव

। यश्चोर, स स्थाणुरितिवद् यो जगत्कर्तृत्वादिविशिष्ट
ाय, परमात्मेति जगत्कर्तृत्वादेनिर्विशेषब्रह्मलक्षणकत्वे ना
श्चद्विरोधः। दृग्दृश्यसम्ब धानिरूपणा मायासम्ब धो ब्रह्म
स्तत्र इति भाव । ननु श्रुतवेन्ना तानामपि यथापूर्व
दृचिदर्शनात कथमुच्यते पुनर यपरत्वमस्माक नास्ती
नेटस्यर्थमुक्तम्—अरण्यजनप्रियस्य ॥ तथाच निवेकवैरा
धनविधुरत्वच्चरणारवि दानभिमुखस्येव कथा, न तु सर्व
दलकृतस्येति भाव ॥ ३६ ॥
; रमाया दृत्तक्षणमित्युक्त्या, तद्वद् अस्मानप्यङ्गीकुर्विति
सूचितम् । पर तु लक्ष्म्या देवगत्या जातो य सम्ब
तु माधमिको, भवतीना तु न तथेयत, कि करोमीतिचेत
।

श्रीर्यत्पदाम्बुजरजश्चकमे तुलस्या
लब्ध्वापि वक्षसि पद किलभृत्यजुष्टम् ॥
यस्या स्वत्रीक्षणकृतेऽन्यसुरप्रयास-
स्तद्वद्वय च तवपादरज प्रपन्ना ॥ ३७ ॥

ारति ॥ श्रीर्यथा यत्पादाम्बुजरजश्चकमे कामयते स्म
पि तत्र पादरज, प्रप ना । तथाच श्रीरपि न दैवगत्या
ाप्तवती, कि तु महता तपसेति भाव । तत्रापि तुलस्य
सह । न चाङ्गसङ्गालाभात सापत्न्यमप्यङ्गीचकार, अ
ातिशयादेवेत्याशयेनाह ॥ वक्षसि पद लब्ध्वाऽपि तुलस्य
ारणामिति वा । तथाच परमात्कृष्टस्वत्र ब्रह्मल भाप्यापि
रजो यच्चकमे तत्रत्वत्यतिरेकविजृम्भितमिति भाव । त

मित्याशङ्क्य रजसो माहात्म्यमाहु.॥ भृत्यैर्नारदादिभिः स
देवानन्यतया सेवितम् ॥ किञ्चेति प्रसिद्धम् । नाऽत्र कि
यम् । रज एवैतादृशसामर्थ्य, यत् तत्र सलग्नचेतस' पुन
मनासम्भवसम्पादन, ना यत्याली लक्ष्मीर्वीक्षभि पद ल
कदापि चेतसोऽ यत्र प्रवृत्तिर्न भवेन्नाप्य यस्य कस्यापि
ते मनसि निधाय यद्रजश्चकम इति भाव । ननु लक्ष्म्या.
विद्धयमित्यत आहु. ॥ यस्या लक्ष्म्या स्तस्य वीक्षणकृते
न् करुणया पश्यत्विसेतदर्थम येषा सुराणा ब्रह्मादीना
। सर्वपुरुषार्थाना तदधीनत्व.त् । तथाच यद्यपि मा प्रार्थ
श्चित् कदाचिदस्य त यदि तप कुर्यात् तर्हि स कोऽवद
दिति विचारत्सास्तस्यास्तावद भयमिति भाव । तद्वद्
प्रार्थनावता बहुत्वम.लोक्य तद्भयात् प्रथममेव तव पाद-
ना । तस्मादस्मदर्थमेवावतीर्णो भवानात्मान न गोपय
सम्भव.दतो माऽस्त्वाग्रह इति भाव. । यद्वा, तव पादस्पर्श
या तादृशो महिमेति चेत् तत्राहु ॥ श्रीरिति ॥ यद्वा, ननु
र्गादेव भवत्स कृतार्थाः किमर्थमङ्गसङ्गार्थ विकलचित्ता ।
सङ्गमवाप्य पुनश्चरणस्पर्शो भक्तिर्न भविष्यति । नचत्र
रिति श्रावितव्यम् । तस्या एव परमपुरुषार्थत्वादित्या
॥ श्रीरिति ॥ तथाच भगवत्पादरज एव तथाविध यथा
ऽनिवासि श्रीरपि स्पृहेव चक्रमे । परमभक्त.य.स्तुलस्याश्च
साधारण स्वाश्रयश्च सर्वैर्भृत्यैस्तदेव जुष्टम् । तस्मात् तत्र
मङ्गमङ्गाभिलाप विरसे तदेकशरणत्वमेवाश्रयिष्याम इति
। अनभिज्ञापक्षे, ननु सौ दर्यादिगुणसम्पन्ना शोभन
॥ महिषीपदयोग्याः किमेव त्वयेत्याशङ्क्य महिषीपदापेक्ष
ष्टमिति लक्ष्मीदृष्टा तेन समाधानमाहु ॥ श्रीरिति ॥ यद्

लक्ष्मीर्नारायणस्य पदाम्बुजरजो यथा चक्रमे तद्वद्वय
ासदृशस्य तव पादरज प्रपन्ना. । यद् यस्य नारायणस्य
तुल्यस्य तवेति वा । नारायणसमो गुणैरिति* गर्गोक्त्या
ारायणसमत्वेऽस्माकं लक्ष्मीसमत्वमर्यादागतमिति भाव. ।
वक्षसि परमोत्कृष्टस्थले पद रमणीभाव ल० वाऽपि तुल
प. या पदमपि भृत्यैर्जुष्ट पुरुषजनसमुदाययुक्तमपि । त
स्या यथा प्रेयसीभावसमुचिता लज्जा स्न यूनता चाभिगण
ाभा नोऽभिलषितस्तथैवास्माकमपि । यद्यप्येव न,तथापि
यणवन्नाचरसि, वक्ष स्थलोद्वहनयोग्या अस्मान् स्वपाद-
धौ स्थातुमपि न ददास्यतो दग्धललाटा वय किं कुर्म
।.।ननु लक्ष्मीवत्त्वमपि युष्मासु प्राप्तमित्याशङ्क्याह ॥ य
। ॥ तथाच या पुत्रतुल्यान् सुरादीनपि ययाकयाचिच्छ-
ृह्णाति सा चञ्चलेति मूर्खप्रवाद इति भाव । श्री पदा-
तश्चक्रमे, वय तु पादरज इत्युक्त्या श्रिय' स्ववासस्थानो-
योपाधिकसेवनमस्माक तु निरुपाधिकमिति व्यज्यते ।
तु स्वस्वपतिवक्षःस्थलरमणयोग्या कथ दासीभाव प्रार्थ-
त्याशङ्क्य, यद्यदाचरति श्रेष्ठस्तदेवेतरो जन * इति
लम्ब्य समाधानमाहु' ॥ श्रीरिति ॥ स्वभर्तुर्नारायणस्य
द लब्ध्वापि लब्धनारायणपादसम्बन्धया तुलस्या सह,
च्च * ट दायनसम्बन्धि पदाम्बुजरजश्चक्रमे । तत्सेवनाऽर्थ
ोभारूपेण प्रेयोवक्षसि रेखारूपेण श्रीरत्रास्ते । तुलस्यपि
दलीरूपेण ह दारूपेण चाऽऽस्ते इति भावः । तस्मात् परम
ा लक्ष्म्या यदेव दशा तदानी वय कथ, भर्तु' शुश्रूषण-
देशार्हा इत्यपि तनिाम् ॥ मानि ीपसे, ननु श्रीवृ दे अपि
ास्त्वाऽत्र वने मम सनिधौ तिष्ठत., यूय किमित्येवनिध

कर्तुं प्रवृत्ता इति चेत् तत्राहु ॥ यद्यपि श्रीर्ह्रि दया सहा-
स्थित ते पादरजश्चकम तद्वद्वय कि पादरज. प्रपन्ना. ॥ अपि
ति काक्षा योज्यम् । तयोरेव तत्तुल्य नास्माकमिति भाव ।
यस्य नारायणस्य पदाम्बुजरज श्रीश्चकम, तद्वद्वय = तेन
यणन तुल्या वयम् अत एव तादृशलक्ष्म्यादिप्रार्थनीय पाद-
सम्पन्नास्तत्र लक्ष्म्यादिसदृशस्य तुल्या आराधनीया इति
॥
निरुक्तिपक्षे लक्ष्म्यादिवत् स्वस्य भगवत्परायणत्वमाहु' ॥
इति ॥ तथाच श्रुत्यादिसमस्ता? यत्पादपद्मे समस्तश्रुतितात्पर्य-
। परमात्मनि सर्वभावेन रति सम्प्राप्नेति भाव ॥ ३७ ॥
तथाच भगवदेकभोग्यशरीराणामस्माक मनोरथ पूरयेति प-
दिग्गता प्रार्थय ते ॥

तन्नः प्रसीद वृजिनार्द्दन तेऽङ्घ्रिमूलं
प्राप्ता विसृज्य वसतीस्त्वदुपासनाऽऽशा ॥
त्वत्सुन्दरस्मितनिरीक्षणतीव्रकाम
तप्तात्मना पुरुषभूषण ! देहि दास्यम् ॥ ३८ ॥

तन्न इति ॥ यस्माद्वय भवत्पादरज एव प्रपन्नाः । प्रपत्तिश्च
प्रसाद विना दुर्लभा । तस्मात् प्रसीद प्रसन्नो भव । त्वयि
। किमपि नावशिष्यत इति भावः । ननु दुःखप्रद मत्सङ्गम
धक दुरदृष्ट भवतीना वर्तते। तत्र मया कि कर्तव्यमिति चेत्
हुः ॥ हे वृजिनार्द्दन ॥ सकलदुःखनिदानभूतदुरितविनाशन
गादिनापि समस्तपापतृणदावानलस्य तवाभिमुख्य प्राप्ताना-
क पापनिवारणे को भार इति भाव'।एतेन स्वपत्यादित्याग

पाप नाशयेति सूचितम् । सर्वधर्मान् परित्यज्य मामेक
न * अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच' *
इय स्नेनास्त्रात् कारागृह गृहम * ताव मोहोऽङ्घ्रिनि
त् कृष्ण न ते जना' * इत्यादिशास्त्रात् । अथ स्वस्य
योग्यतामाहु ॥ तेऽङ्घ्रिमूल प्राप्ता इति ॥ ननु स्त्रीणा
ईश्वरादपि प्रसन्नाद् गृहस्थाश्रमसुखमेव प्रार्थयति । त
त्र किं प्रसादोऽपेक्षित इतिचेत् तत्राहु ॥ वसतीर्विसृ
गृहस्थाश्रम एवास्माभिस्त्यक्तो, न तु गृहमात्रमिति सूच
तीरति बहुवचनम् । यतो वय, त्वदुपासनाऽऽशा भग
[ करिष्याम इत्येवविधा आशा यासा ता' । न तु तज्ज
स्माकमपेक्षितम् । तथाच ग धपुष्पादिनोपासनपराणा
नानामित्रावर्जनीयतया प्राप्ते सुखोपभोगे न कश्चिद्दोष इति
यद्वा, तवोपासस्योपासनस्य न।शो यासु ता वसती' ।
ष्टिसानुकूल एव प्रसादो युक्तो न तु तत्प्रतिकूलः ।
पर गृहसम्बन्धिवार्ताऽपि न विधेया । तत्र प्रेषण तु
मिति भावः । एव भगवन्तमभिमुखीकृत्य प्रार्थ्यमावेदय
दिति ॥ हे पुरुषभूषण दास्य देहि । अधिकारिभेदेन
नकविधत्वात तद्रूप स्वतापोत्पाद्याभिव्यञ्जयति— तव
रमानन्दजनक यत् स्मितपूर्वक निरीक्षण तेन तीव्रो यः
तप्ता त करणानामस्माकम् । तथाचैतत्तापनिवर्तकदास्य
ान. । दास्यस्य स्वव्यापारता यस्य, देहीति प्रार्थनया
पनिवृत्तस्तद्द्वारत्वात् तस्याश्च त्वदधीनत्वाद् यथाऽस्माक
थ त्वदपेक्षा तथा तवास्मदपेक्षाय। स्वयमुद्यम्यास्मदुपभोगः
प्रभुणा ह्यपेक्षितवस्तुनि दत्ते दास्य भवतीति भाव । ननु
कामोपाधिक दास्य प्रार्थ्यते, शुद्धमेव तव प्रार्थ्यतामिति

राहुः ॥ पुरुषभूषणेति ॥ पुरुषो भूत्वा भूषणरूप ! तथाच
यथा कण्ठादौ धार्य्यते तथा पुरुषाकारभूषणरूपस्त्वमपि
ोग्यस्तस्मान्मणिखचितभूषणधारणे लाक्षाधारणत्र मध्येका-
ाो, न तु तदुपाधिकृत दास्यमिति भाव । यद्वा, तव त-
प्रसीद । हे वृजिनार्दन ! स्वमाप्तिप्रतिब धक पाप नाशय ।
प्राप्ता निसृज्य वसतीरिति ॥ तस्मात् तव सु दरस्मितस्य
ीक्षणेन चिन्तनेन तीव्रो भजनाभिलाषस्तेन तप्तात्मना तप -
त्ताना दास्ये लब्धाधिकाराणामस्माक लक्ष्म्या इवाऽस्मद्-
ास्य देहि । यतो हे पुरुषेषु भूषण! तवापीदमेव योग्य-
ास्माक च कामोपाधिकृतोऽपि तव सम्ब धोऽलङ्कारायैवेति
अनभिज्ञापक्षे, नारायणसमो गुणैरित्युक्तत्वात् त्व नारा-
धारणे योग्यो, वय च तद्भक्तगुणधारण इत्याशयेनाहु ॥
॥ यस्मात् त्व नारायणसमस्तस्मात्तस्तद्भक्ततुल्या अस्मान्
ननु प्रसन्न एवाहमस्मि, स्वस्मि मम कोपो भवतीभि॰
ः इति चेत्, तत्राहु ॥ हे वृजिनार्दन, दु खवि वसकर ।
स्ते भवतीना किमपि दुःखम् । गृहाद्युपद्रवजनितदु ख-
ादिविनाशाय ममोद्युक्तत्वात् । तस्मात् किमिसेव दे यमा-
ाति चेत्तत्राहु ॥ त इति ॥ तथाच गृहादिक महाग्निज्वालया
, तिष्ठतु वा । नाऽस्ति अस्माक तत्प्रयुक्त किमपि दु ख,
ा भाव । ननु भवत्वेव, यदर्थ वसतीर्विसृज्य मदङ्घ्रिमूल
देव याच्यतामिति चेत् तत्राहु ॥ त्वदुपासनाऽऽशाः ॥ तवो-
ा सेवाया श्लेषेण, उप आसङ्गेन स्थितिरूपा आशा यासा,
ाया दारयमाने कस्मिँश्चित्सुखे ता॰ । त्वत्सुखार्थमङ्गसङ्ग-
ापोपसनापराणामस्माकमप्यवर्ज्जनीयतया प्राप्तेन सुखोप-
ाा दोषः इति भाव॰ । ननु तादृशमुपासन तु स्वपतेरेव

न चाऽहं युष्माकं पति ।नन्वस्तु सम्प्रति विवाह इति
रहितस्य मम सम्प्रति विहानधिकारात् । विवाहित
पे तद्योगाच्चेत्याशङ्क्याहु. ॥ त्वदिति ॥ तादृशक
स्माकं दास्यं दासीभावमेव देहि । तथाच न वयं
. किन्तु दास्याऽर्थि य एवाऽतस्तवोपनयनादि
च कन्यात्वे परोढत्वे वा न काऽपि हानिः । स
म्भवादिति भाव. । यद्वा, हे वृजिनार्दन अस्माकं
नुचितमिति भाव । न चाऽस्यास्मद्दुःखनाशे क
इत्याशयेन सम्बोधयन्ति ॥ हे सुन्दरस्मितनिरी
ास्मद्दुःखनिवृत्तिरिति भावः । यतस्त्वत् त्वत्त
कामस्तेन तप्तात्मनाम । अतस्तत्तापनिवृत्त्यर्थं विक
भूत्वा दास्यमात्रं देहि, न तु बहु प्रार्थयाम, यत्र
त्मानं कृतवाननीति भाव । किञ्च कामप्रह्लोदधि
ठम्पटस्य तवास्माभिर्युवतिभिः स्वाङ्गरूपासन सु
वनप्रार्थनाऽपि त्वदर्थमेवेत्याशयेन सम्बोधयन्ति ॥
। यद्वा गौराङ्गीनामस्माकमलङ्कारार्थं पुरुषाकारमि
भूषणं विधात्रा रचितम् । तस्मात् स्वोत्पत्तिसार्थ
गठसलग्नता त्वयाऽवश्य सम्पाद्येति नर्म व्यञ्जया
रणेति ॥ मानिनीपक्षे, ननु लोकोत्तरपरमसौन्द
स्त्रियो मह्यास्य प्रार्थयन्ति । भवत्यस्तु स्वामित्वमपि
प नैवाङ्गीकुरुथति महान् याय इत्याशङ्क्याहु. ॥ त
मान्नः प्रसीद । अस्मद्ग्रहममुमर्थं च सज । हे वृजि
च्छेदकस्यापि दु खानुच्छेदनमनुचितमिति भावः
र्दनस्य तव स्वदुःखानिवारणमनुचितमिति भावः
दु खमपयति प्रार्थयतीति । तथाच दु खोदर्कं वस्

मेति भाव.। यतो निरपेक्षाऽपेक्षा केवलं दुःखायैव भवती-
ाहुः ॥ नेति॥वसतीर्विसृज्य त्वदुपासनाऽऽशा वयं तवाङ्घ्रि-
ाप्ताः। तस्माद् त्वत्सु-दरस्मितनिरीक्षणलग्नात्मनामेव दास्यं
त्वस्माक स्वामिनीभावमप्रार्थितत्वात् । न ह्यप्रार्थितमनु-
वस्तु कस्यचिदुपादेय भवतीति भाव. । पुरुषानेव भूप
थाच सक्तकामस तप्तचित्तो यदि जातोऽसि तर्हि गोप-
गोपान् भूषयेति भावः । यद्वा, शरीरमात्रमस्माकं तत्र
र्तते, मनस्तु स्वस्वगृहमेव प्रविष्टम् । अत एवाग्रहेणात्राव
कृतेऽपि नास्ति किञ्चित्फलमित्याहु. ॥ तदिति ॥ तत् त
परमस्मासु प्रसाद एव विधेयो, न तु वृथाग्रहः । न चेद्
स्वपरदु'खजनकत्वादस्य कर्मण इत्याशयेन सम्बोधय-
वृजिनार्दनेति ॥ मत्सन्निधानेता स्थिता इति न भ्रमित
य तु तेऽङ्घ्रिमूल विसृज्य, वसतीः प्राप्ता । नन्वतः किंच-
दुपासन सम्भवति । यतस्त्वदुपासस्य समीपावस्थाना
ासनस्य नाशो याप्तु । अत' स्वाभाविकास्मत्सु दरस्मि
तीव्रकामाक्रान्तता तव नोचितेति सूचयन्त्य सम्बोधय-
सु-दरस्मितनिरीक्षणतीव्रकाम ॥ नेद पुरुषरत्नाना लक्ष
पुरुषापसदानामत' पुरुषभूषणस्य तव नेदमुचितमिति
म्बोधयन्ति ॥हे पुरुषभूषणेति॥ तस्मात् पुरुषभूषणस्य तव
प्तात्मनामपि स्त्रीणा स्त्रीभावदानमयोग्यम् । किन्त्विदानाव
दास्यमात्र दातुमुचितमित्याशये नाहु' ॥ त्वत् त्वद्वियोगात्
मपि दास्यमात्र देहि । सर्वथा विमुखाभिस्तु भाषणमाप
वतमित्यर्थ. ॥

नहत्तिपक्षे, अथ य एषोऽन्तरादित्ये हिरण्मय. पुरुषो
हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णस्तस्य

्यास पुण्डरीकमेवमक्षिणी, तस्योदिति नाम, स ।
मभ्य उदित, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य
श्रुतय. परमात्मानमेवोपास्यमावेदयन्ति ॥
॥ यस्मात् सर्वश्रुतितात्पर्य्यविषयो भवानेव
परा अस्मानपि प्रसीद । अस्मत्तात्पर्य्यविषयत्व
। यतो हे वृजिनार्दन ! सर्वपापासस्पर्श ! f
मात्वेनोपासितस्त्वमुपासकस्य दुःखमात्रबीजभूत
र । स एष सर्वेभ्यः पाप्मभ्य उदित इति सर्वपा
स च परमात्मन एव सम्भवति । आत्माऽपहतपा
ात् । उदेति ह वै सर्वेभ्य' पाप्मभ्यो य एव वे
् सर्वपापनिवृत्ति' कथितेति भावः । ननु हिरण्य
श्रवणाद्, य एषोऽ तरादित्ये पुरुष इत्याधारश्र
ादिप्रतिपादनपरणा श्रुतीना परमात्मपरत्वमऽश
ाव्यय, स भगव कस्मिन् प्रतिष्ठत स्वे महिम्नि, ः
ातश्च नित्य इत्यादिश्रुत्या रूपादिराहितब्रह्मस्वरू
ह्याह। ॥ त इति ॥ वसतीरापातत. प्रतीयमानप
ातिपाद्यरूपा विसृज्य तेऽङ्घ्रिमूल प्राप्ता, यतस्त्वद्
ाशा आशयो यासा ता वयम्। तथाच परमेश्वरस्य
ाधकानुग्रहार्थं मायामयरूपादिस्वीकारो न विः
ामधिष्ठाय सम्भवाम्यात्ममायया * माया ह्येष
मा पश्यति नारद * सर्वभूतगुणैर्युक्त न मा
ादिस्मृतेः । अशब्दमित्यादिशास्त्र निरस्तसर्ववि
ः । सर्वकर्मा सर्वकामः सर्वग ध' सर्वरसः हिरण्य
ह्ममुपास्यब्रह्मपरम् । तथा स्वमहिमप्रतिष्ठस्याधारा
ुपासनार्थो न विरुद्धयत इति भाव. । तस्मादः

लावण्यसागरविग्रहस्य तव सु दरस्मितस्य निरीक्षणे यो
योऽभिलाषस्तेन तप्तात्मना जीवाना, हे पुरुषोत्तम दास्य
त्वदनुग्रह विना तव दास्यस्य दुर्लभत्वात् । तेन विनो-
म्भवात् । तत्प्रदानेन जीवानुद्धरेति भाव । यद्वा, तव
तद् स्मित चराचरात्मक निरीक्षण भूतात्मक च जगत् तत्र
य कामस्तेन तप्तात्मनाम् । तथाच तादृशतापनिवृत्त्यर्थं
देहीसर्थः । निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च
* स्मितमेतस्य चराचरमस्य च सुप्त महाप्रलय इत्यभियुक्त
राचरादेर्भगवत्स्मितादिरूपेण निरूपण द्रष्टव्यम् ॥ ३८ ॥
ु यदि निरुपाधिकप्रेमवन्तो भवन्तस्तर्हि सालोक्यादिफल
, किमर्थ दास्य मार्थ्यत इत्याशङ्क्याहु' ॥

वीक्ष्यालकावृतमुख तव कुण्डलश्रि
गण्डस्थलाधरसुध हसितावलोकम् ॥
दत्ताऽभय च भुजदण्डयुग विलोक्य
वक्ष श्रियैकरमण च भवाम दास्य ॥ ३९ ॥

क्ष्येति ॥ इद सर्व वीक्ष्य दास्य एव भवाम । तत्र सा-
याकमपेक्षितम् । यतोऽलकै' समानरूपैस्तदुपलक्षितै. । स ,
भ्रमरैश्चावृत मुखम् । तथाच सारूप्य गतानामपि या भक्ति
ते तदर्थिन्यो वयमिति भावः । तथा सामीप्यापेक्षामपि
॥ कुण्डलाभ्या श्री. शोभा यस्य, तयो श्रीर्यस्मादिति
तथाचाऽस तत्समीपयोस्तत्र प्रमाणभूतसाख्ययोगरूपयो
रपि यदा मुखावलोकनपरत्व तदा यस्य का कथेति
गण्डौ विशालौ सुधापानार्थं स्थले यस्मिन्, तथा अधरे

सुधा यस्मिन्, गण्डस्थल च तदधरसुधच । कुण्डलयोः श्रीर्ययो
स्ते गण्डस्थले यस्मिन्निति वा । एतेन सालोक्यापेक्षा निवारि
ता ।सालोक्य प्राप्तयोरपि कुण्डलयोर्मुखनिष्ठाधराऽमृतपानाभि
लाषेण लोलत्वदर्शनात् । किञ्च, हसितपूर्वकमवलोकोऽवलोक
यस्मिँस्तद्धसितावलोकम् । अनेन सायुज्यापेक्षाऽप्यस्माक नास्ती
त्युक्तम्। यथोक्तमुखावलोकनज यान दस्य पृथक्स्थितिं विनाऽनु
भवासम्भवात् । किञ्चे द्रादिपदमप्यस्माक नापेक्षितमित्याशयेनाह
दत्ताऽभय च भुजदण्डयुग विलोक्येति ॥ तथाचासुरादेर्बिभ्य
इन्द्रादेरप्यभयप्रद लोकपालास्पदम्, अपराधिजनदण्डरूपभुजाद्वया
ऽवलोकनपराणामस्माकमि द्रादिपदाभिलाषो नोपपद्यते । इन्द्रा
दीनामपि भुजदण्डयोर्निविष्टत्वादिति भावः । एहिकैश्वर्य्यवाञ्छा
ऽप्यस्माक नास्तीत्याशयेनाहु, ॥ वक्षः इति ॥ श्रिय एक मुख्य
रमण वक्ष स्थल विलोक्य । चकाराद् धर्मस्यापि सग्रहः । तथा
सर्वत' सप्लुतोदकह्रदवद तद्भूतसर्वपुरुषार्थ दास्यमेव प्रार्थयाम
तुलयाम लवेनाऽपि न स्वर्ग नाऽपुनर्भवम् * भगवत्सङ्गिसङ्गस्य
मर्त्यानां किमुताशिष इति भगवत्साङ्गिसङ्गस्यापि यदैव माहात्म्य
तदा साक्षाद्भगवत्सङ्गस्य माहात्म्य किमु वक्तव्यमिति भावः
एतेन भर्तृत्यागस्य पापरूपत्व प्रक्रुते न सम्भवति दु स्वरूपफलाजन
कत्वात्। भग तमवलोक्य लोकद्वयस्यापि सक्तत्वाद्येत्यपि सूचितम
यच्च, अस्वर्ग्यमयशस्य च फल्गु कृच्छ्र भयावहम् * जुगुप्सित
च सर्वत्र ह्यौपपत्य कुलस्त्रिय इति पइदोपाभिधान तदपि प्रकृते
नोपपन्नम् । भगवतो यथोक्तषड्विधगुणत्वादित्यपि ध्वनितम् । य
द्वा, ननु किमवलोक्य दास्यभाव, प्रार्थ्यत इत्याशङ्क्याहु ॥ वीक्ष्ये
ति ॥ श्रियैकरमणमिति मुखस्यापि विशेषणम् । तथाच लोकोत्तर
सौन्दर्य्यम् अवलोक्य दास्यो भवाम । ननु दृष्ट्वैव वाञ्छा न विधे

सयोग्यानामापातरम्याणामपि बहूना पदार्थाना सत्त्वादि-
निरासायोक्तम् ॥ वीक्ष्येति ॥ भगवद्दास्यमेव सर्वापेक्षयो-
अत्रैवविधविग्रहप्रादुर्भावोऽस्माक दास्यपददानायैव भगव-
इति च सम्यग्विचार्येत्यर्थ. ॥ श्रियैकरमणमित्यनेन सर्वो
राशिरोमणिभूता श्रीर्यत्र सर्वभावेनासक्ता तत्र का वय वरा
गेऽप्यनधिकारिण्योऽत श्रियैकरमण मुखादिकमवलो
यद्विचारणीय तल्लक्ष्म्यैव स्वयवरकाले विचारितमिति
म् । तदुक्तम् । नूनं तपो यस्य न मन्युनिर्जयो ज्ञान क्वचित्
सङ्गवर्जितम् ॥ कश्चि महाँस्तस्य न कामनिर्जयः स ई
न परतो व्यपाश्रय ॥ धर्म क्वचित् तत्र न भूतसौहृद
क्वचित् तत्र न मुक्तिकारणम् ॥ वीर्य न पुंसोऽस्त्य
कृत न हि द्वितीयो गुणसङ्गवर्जित. ॥ क्वचिच्चिरायु
लमङ्गल क्वचित्तदप्यस्ति न वेद्यमायुष ॥ यत्रोभय
मोऽप्यमङ्गल सुमङ्गल कश्चन काङ्क्षते हि माम् ॥ एव
व्यभिचारिमद्गुणवर निजैकाश्रितसद्गुणाश्रयम् ॥ वव्रे
गुणैरपेक्षितन रमा मुकुन्द निरपेक्षमीप्सितमिति । तस्माद्-
तर्नाऽविचारप्रयुक्ताऽतो नोपदेशसहस्रैरपि निरोद्धु श-
ाव सूचित. ॥ अनभिज्ञापक्षे, ननु दास्य देहीति भव
त, तत्र मूल्य श्रुत्वा यत् कर्तव्य तत् करिष्यामीत्याशङ्क्य
ल्पमूल्या एव वयमतो मास्तु भवतस्तद्दानाचि तेत्याशयेनाहु'
॥ अलके. ॥ केशाग्र तभागै. शोणवर्णोष्णीषधारणसमये
गे लसद्भिरावृतमनाच्छादितम् । चूडाव धाबर्हापीडधारण
श्रितरनतिदीर्घैरलकैरीषदावृतमाच्छादितम् । अभ्यङ्गोद्वर्तना-
आसम तादावृतमाच्छादित मुख वीक्ष्येक्षणाभ्या सम्य
। अनेन मुखोर्ध्वभागशोभोक्ता । तथा कुण्डलयो. समग्र

लकैरनावृतयोरीषदावृतयो सम्पूर्णावृतयोरचपल
रित्य तच्चपलयोश्चालङ्कारप्रतिबिम्बरूपा श्रीर्ययोस्ते
र्णमस्तत् । अनेन पार्श्वयोः शोभोक्ता । अधरे सुधा
सित महसितपूर्वकमवलोको यस्मिंस्तद्, हसितं च
द्वैक्य वा । अनेन मध्याधोभागशोभाः । तथा
कोटिचिन्तामणिविचित्ररत्नखचितमन्दिरसप्तलोका
रप्यधिकमस्माकम् । तव च सहजत्वादनायाससा
मूल्येन जातं चास्माकं दास्यं न किञ्चिदपि वक्त
शिष्यत इति भावः । लोभविशेषोत्थानात् सौरभ्य
Sधरे सुधानुमानम् । ननु नैवं वाच्यं, युष्मत्पतिभ्यं
हमिसाशङ्क्य, किमेव मत्सक्षोपलब्धस्वसामर्थ्यं गो
नाहुः ॥ दत्ताऽभयं च भुजदण्डयुगम् ॥ तथा चा
दण्डालङ्कृतस्य तव नाऽस्ति भयसम्भावनेति
गोवर्द्धनधारणादिना दत्ताभयेभ्योऽस्मत्पत्यादि
न्तभयेभ्य इन्द्रादिभ्यश्च भयाऽभावात् तव दास्ये
स्माकं लोकद्वयेऽपि भयशङ्केत्यपि ध्वनितम् । गा
मभयहारित्वमप्यत्र व्यङ्ग्यम् । दण्डपदेन सुदृ
क्ता । एवं व्यञ्जितेन वीररसेन शृङ्गाररसोऽपि पुष्टो
थापि परदारसम्बन्धलाञ्छनान्निष्कलङ्कोऽहं बिभेमि
परि तर्ज्जनीं धृत्वा पृच्छ स इवाहुः ॥ वक्ष इति
एक श्रेष्ठ रमणं यस्मिंस्तत् । तथा च, हे निष्कलङ्काग्रग
द् बिभेषि तर्हि श्रीमन्नारायणनार्यं लज्जया गृह
किमिति वक्षस्युद्वहसि । तस्मा मैवं वोचस्त्वं तु ब्रह्म
र्वावस्थितस्य कस्यापि कामपि नारीं न सक्ष्यसी
यो वयम् । अतस्तादृशं स्वसामर्थ्यं माऽपलोपयेति

। च स्वानुरागवैशिष्ट्यस्य, मुखे चुम्बन, भुजवक्षसोरा
नेति मयोजनद्वयस्य च ध्वननाय । अत्र वीनां पक्षिणा-
रोतिश्लेषेण स्वनेत्राणा खञ्जनत्वम् । तत्रालककुण्डलपा
द्बन्धः । गण्डयो पाशस्थानत्वम् । सुधाया आहारत्वम् ।
लोकमिति तन्नेत्रयो स्वनेत्रखञ्जनाकर्षखञ्जनत्वम् । भुज
सञ्चारदेशत्व च व्यज्यते । तथाच यथोक्तस्वरूपदर्शन
क्तिमदन्त करणाना महाजालबद्धनयनखगानाम् अस्माक,
, नेत्यादिवाग्वज्रमहारेण हृदयानि मा विदारयेत्याशय. ।
पक्षे, ननु कथ तर्हि ममाङ्गानि निरीक्षमाणा एव तिष्ठतेति
ाहु ॥ वीक्ष्येति ॥ त्रिलोक्यापि किं वय दास्यो भवामेति
नैत्रेत्यर्थ. । यद्वा, ननु साहस मा कृथ, ममाङ्गानि विलोक्य
च वक्तव्यमित्याशङ्क्याहु ॥ वीक्ष्येति ॥ तथाच न वय
कोटिखिङ्गैरपि धैर्याच्चालयतु शक्या इति भाव' । यद्वा
ास्मान् दासीकर्तु महत्युत्कण्ठा वर्तते तर्हि योषिद्रूपस्य
ासाभावात् स्वपति कञ्चन दर्शय, भवतु, त दृष्ट्वा वय दा
वेष्याम इति नर्म व्यञ्जयन्त्य आहु ॥ वीक्ष्येति ॥ वक्षसि
युक्तो यस्तव एको रमण का तस्त, दत्ताभय भुजदण्ड
विलोक्य वय दास्यो भविष्याम । तथा बहुत्वख्यापना
म् । सोऽस्माक प्रदर्शनीय इत्युपहासोक्ति ॥
वृत्तिपक्षे, चित्तैकाग्र्यास्पदस्य मुक्तानुग्रहार्थ गृहीतलीला
भगवतो मुखादिक विचार्य तथैवालोक्य च वय तवैव
लिप्स्याम इति, वीक्ष्य इति ॥ तथाच समस्तोपासनावि
तेत त्पर्यगोचरस्यैवविधस्वरूपस्य भगवतो दास्यनैवोद्धारो,
त भाव ॥ २९ ॥
: युष्माकमपि भावोऽपेक्षित., स च यथा मच्छ्रवणादिना

ऽभू गे नास्ति परलोकनाय । त्यक्त्वा स्वधर्मं चरणाम्बुज
नपक्वोऽथ पतेत् ततो यदि * यत्र क्व वाऽभद्रमभूदमु
, को वाऽर्थ आप्तोऽभजता स्वधर्मत * न वै जनो जातु
ाव्रजे मुकु दसेव्य यवदङ्ग संसृतिम् * स्मरन्मुकुन्दाङ्घ्र्यु
पुनर्विहातुमिच्छेन्न रसग्रहो जन इत्यादिशास्त्रात् । सभा
वाऽकीर्तिर्मरणादतिरिच्यत इत्यादिशास्त्र तु जिगीषु-
द्रयविरुद्धकर्मनिन्दापरम् । शिष्टनि न्दापर च । तत्र वय
र्षणसन्यासिसदृशा न त्वच्चरणसङ्गमरहितजीवनाभिलाषा,
परलोकविरोधिकर्मपरा, नाऽपि भगवत्स्वरूपाभिज्ञशिष्टनि
ाररता इति भाव । का स्त्रीत्यनेन, यन्मोहिता, पुरुषा अ गो
त मोहिता स्त्री का न चलेदित्यपि सूचितम् । किञ्च य
ण दिन, च द्रमसा रात्रिस्तथा त्रैलोक्यस्यापि सुभगत्व
 येन भगवद्रूपेण तत् त्रैलोक्यसौभगमिदमनुभूयमान रूप
क्ष्य यद् यतो गोद्विजद्रुममृगा पुलकानि अबिभ्रन् अ
गवादीनामनभिज्ञाशिरोमणीनामपि यद्दर्शनानुरागो दृश्य-
ऽतत्स्वरूपाऽभिज्ञानरसज्ञानामस्माक स्वधर्मत्यागे किं ाच
त्रापि त्वद्द्योतकशब्दश्रवणमात्रेणापि निजधर्मत्यागो यु-
: पुनस्त्वदनुभवेनेति भाव ॥ अनभिज्ञापक्षे, ननु नेय ल-
क तु यद्वक्षसि सहजा लक्षणविशेषरूपा स्वर्णरेखा विराज
दृष्ट्वा पतिव्रताशिरोमणिभूता लक्ष्मीमपि, स्वय दुष्टोऽ या-
यतीति न्यायमनुसृत्य दूषयितु प्रवृत्तास्तस्या मत्तश्च भय
त्याशङ्क्य, न वय कामपि दूषयाम, किं तु सर्वधर्मध्वसन,-
विधात्रा सृष्टोऽसीति सरोषविभ्रममाहु ॥ कोत ॥ अङ्ग
, तव कलपदाऽमृतवेणुगीतसमोहिता आर्यचारतात् पाति-
गान्निजधर्मात् का स्त्री न चलेदपि तु सर्वाऽपि चलेदे

ाऽत्वत्कर्तृक गीतमेव दूषयति । धर्मत्याजनलक्षण च
ःयत्येवेति भाव' । न केवल तव गीतिमेत्रैवविधम्, अपि
ःयाहु ॥ त्रैलोक्यसौभगमिति ॥ ननु नास्ति मम गी
ाभाव , कि तु स्त्रीणामेवाय स्वभावो यद् यत्किञ्चि
कमुपलभ्य मोहिता भव तीति चेत् तत्राहु॰ ॥ यदि
गीतरूपाभ्याम् । यद्वा, न"वेव पतिव्रताभिरुपहसनीया
पाशङ्क्य, तव गीतादिप्रसादाच्चतुर्दशभुवने उपहास
न भविष्यति । सर्वासा मोहावश्यम्भावादित्याशयेनाहु
किञ्च चराचरात्मक सर्वमपि तव गीतादिना मोहित
[ उपहासशङ्केत्याशयेनाहु' ॥ त्रैलोक्येति ॥ मानिनी
मदीयगीतादिक भवतीना न क्षोभकर, तर्हि किमर्थ चरि
ते चेत् तत्राहु॰ ॥ केति ॥ गीतमोहिताऽपि आर्यचरि
त्वत्त॰ सकाशात् का स्त्री न चलेन्नापययात् । वि
ावादयोऽपि सपुलकास्तदिद त्रैलाक्यसौभग रूप दृष्ट्व
भङ्गभिया का नापययात् । सुन्दरीणा सुन्दरसनि
न्दानिदानमिति मोहिताऽपि यदि चलेत् तत्रमोहिता
ापसराम इति भाव॰ । यद्वा, तवास्ति स्वगीतादिप्रयु
इति वय जानीमस्तथापि तेऽस्मान् प्रत्यऽकिञ्चित्क
नाहुः ॥ केति ॥ मोहितानामेव वशीकारो भवति ।
ाद्दागीतेन न मोहिता सा स्त्री का आर्यचरिताच्चले
ाऽपि नास्तीत्यर्थ' । किञ्च, यतो गवादयः सपुलका
ोक्यसौभग स्त्रीय रूप तु निरीक्ष्य स्वरूपोत्कर्षाभि
चाराच्चलेदिति ॥
ाचिपक्षे, तस्मात् त्रिलोक्यां नास्त तथाविधा श्रुतिर्या
दयेदित्याहु॰ ॥ केति ॥ तव, सर्वे वेदा यत्पदमामनं

ोम्येदमग्र आसीदित्यादिरूप यत् कल्पदाऽमृतेनेणुगीत
ामा =सम्यक्प्रमाणम । प्रत्यगभिन्नपरमात्मपराणामुपनि
षयस्य कालत्रयाबाध्यत्वात्तद्विषयकप्रमाणस्य पारमार्थिक-
कत्वरूपप्रामाण्यवत्त्वात् सम्यक्त्वम् । तदितरप्रमाणाना व्य
ााया बाधाभावात् । व्यावहारिकतत्त्वावेदकप्रामाण्यकत्वा
कम् । तथा, ऊहितो मनननिदिध्यासनपूर्वकमवगतो य' प्र
म परमात्मा तस्य चरितात् सृष्टिकर्तृत्वाादलक्षणात्
स्त्री तदन्यपरा श्रुतिर्न चलेन्न प्रचलति । अयमर्थ । सृष्टि-
कश्रुतीना सृष्टिमुप यस्य तन्निषेधाभिधानादऽद्वितीयक
ीयत्व प्रतिपादित भवतीति परम्परया निरस्ताखिलद्वैतत्रि
त्रण्डे सच्चिदानन्दैकरसे परमात्मनि तात्पर्य्यम् । अन्यथा वा
षिद्धस्य रूपस्यान्यत्र सत्त्ववद् ब्रह्मणि प्रतिषिद्धस्य द्वैत
सत्त्वशङ्का स्यात् । उपासनाप्रकरणपठितसगुणब्रह्मप्र
काना तूपासनाविधिपेक्षितगुणारोपमात्रपरत्व, न गुणपर-
निर्गुणप्रकरणस्थाना निषेधविध्यपेक्षितनिषेध्यसम्पादक
नियोग । कर्मप्रकरणपठिताना संयोगपृथक्त्व यायेन वि
द्यामुपयोग इति काऽपि श्रुति परमात्मचर्य्यावर्णनाच्च च
। ननु महेन्द्रादिप्रतिपादनपरतयोपलभ्यमानाना तासा क
त्मपरत्वमितिचेत् तत्राहु ॥ त्रैलोक्येति ॥ इदमनुभूयमा
त्तास्फूर्त्यात्मक, येन सेश्वर जगत् सुन्दर दृश्यते तदालो
देवादिप्रतिपादनपराणा मध्ये च काऽपि न चलति । यद्य
त् सत्त्व श्रीमदूर्जितमेव वा * तत्तदेवाऽवगच्छ त्व मम
सम्भवमिति भगवत एव इन्द्रादिरूपेणावस्थानाभिधाना-
्व । इदमेवोदाहरणै' स्पष्टयति ॥ यदिति ॥ येन रूपेण,
णिपाद तत् सर्वतोऽक्षिशिरोमुखम् * सर्वत. श्रुतिमल्लोके

सर्वमावृत्य तिष्ठतीति सर्वात्मभावप्रतिपादनादिति भाव ॥ ४० ॥
अगोचरदिदृगता प्रार्थय त ॥

व्यक्त भवान् व्रजभयार्त्तिहराऽभिजातो (१)
देवो यथादिपुरुषः सुरलोकगोप्ता ॥
तन्नो निधेहि करपङ्कजमार्त्तबन्धो
तप्तस्तनेषु च शिरःसु च किङ्करीणाम् ॥ ४१ ॥

व्यक्तमिति ॥ आदिपुरुषो देवो भवान्, यथा वामनादिरूपेण सुरलोकगोप्ता जातस्तथेदानी व्रजभयार्तिहरोऽभिजात, प्रकटित इत्यस्माक व्यक्त विस्पष्टमस्ति ज्ञानम् । वसुदेवगृहेऽवतीर्णस्य सद्यो व्रजप्रवेशात् । एव मुख्यमवतारप्रयोजन जानीमः । तत्र व्रजस्थाना गोपादीना भय भगवता नाशितम् । सम्प्रति तत्रानामस्माकमार्तिहरणमवशिष्यते । तदवतारसार्थक्याय तदावश्यकमिति भाव । ननु तथापि मर्यादयैवार्तिहरण युक्तमत कामार्त्तज्ञानेन हरिष्वामीत्याशङ्कानिरासायोक्तम् ॥ द० ॥ यथादिपुरुष' ॥ सर्वकारणभूत । ततश्च देवासुरादिषु समोऽपि इन्द्रादिस्वभक्ताभिलाषानुसारेणोपेन्द्रादिदेवो भूत्वा दैत्यान् मारयन् वैषम्यमङ्गीकरोति तथाऽस्मदर्थं गृहीतगोपालावग्रहः स भवानऽस्मदार्तिहरणाय मर्यादोल्लङ्घनमपि करोत्विति भावः । तस्माद्, ये यथा मा प्रपद्यते तॉस्तथैव भजाम्यहमिति स्वप्रतिज्ञामनुसरेत्याहु ॥ तदिति ॥ यस्मा मनारथाऽनुसारिफलप्रदातृत्वेन भवान् प्रसिद्धस्तस्मान्नोऽस्माक स्तनेषु कामार्तिनाशाय करपङ्कज निधेहि । तत्र योग्य सम्बोधनम् ॥ हे आर्तब धो ! शिर सु च निधेहि । कामोपाधका

(१) व्रजजनार्तिहर इति पाठान्तरम् ।

वतीना भक्ति श्रुद्धायामेव तस्या पर्यवस्यतीत्याश्वसना
भाव । यद्वा, अस्माकमेव भयार्तिहरण तवाऽवतारस्य
योजनम् । तेनास्माक हृदयतापनिवृत्त्यर्थं स्तनेषु करपङ्कज-
स्थापितत्वात् तापनाशक निधाह । ससारभयनिरासाय च
तन्निधेहीत्यर्थ । यतो वय किङ्कर्योऽतोऽस्मद्भयार्तिना-
यास्तव यागयमेत्य हु ॥ किकरीणामिति ॥ अयभि-
स्मादल चातुरीनिव धनैर्नोगिराभे , सवथाप्यस्मदभि-
न्यादयत्याहु ॥ व्यक्तमिति ॥ यथा अदिसा जात आदि-
्र सुरलाकगोप्ता तथा व्रजस्य दावादिभय वालवर्षा-
च हतु व्रजेशगर्या भवानभिजात । नारायणसमो गुणे
वात । व्यक्तमिद, न तु गूढमतोऽस्माक कामादिभयार्ति-
[ स्वव्रतरक्षणायावश्यकमिति भाव । तच युष्मदङ्गीकारे
पत्नीना भयार्ती भविष्यतस्तद्धरणार्थमभिजातस्य तत्प्रदान-
मिति शङ्क्यम् । अग्रहणे सत्यस्म रण वश्यम्भावात्स्म-
ना तत्कनभयार्तिनाशस्यास्मद्ग्रहण विनाऽसम्भवात् । भ
स्यामीति स्मानि व्रतामित्यपेक्षायामाहु ॥ तदिति ॥ यस्मा
ा तत्ेष्वस्माक स्तनेषु करपङ्कज, निधेहि=सम्यक्स्था
हस्तस्य पङ्कजरूप वात सूर्यवदेव कमलस्येव तस्यास्मत्स्तन
सुखमेव भावष्यतीत व्यङ्ग्यम् । यतो हे आर्तबन्धो नो
नाम निरर्थक भविष्यतीति भाव' । सदैयमाहु ॥ किक
शर सु च निधेहि ॥ इत परमेवानन्यात्रेणास्माक दासी.
भाव । यद्वा, शिर सु करपङ्कजस्थापनेन त्यागभय
। । यतो वय किकर्य । त्र चार्तब धु । तस्मादस्पाक
[ क स्वशिरन्यास,अ नभिमित ता तापत्वमिति भाव ।यद्वा
मनुचितम् । यथा त्व किङ्कर्यरता परीक्षार्थे त्ता तथा

कर्तव्यमिति रसोक्तिः ॥ मानिनीपक्षे, बलात् स्तनादौ हर
प्रवृत्तमालक्ष्याहुः ॥ व्यक्तमिति ॥ व्रजस्य भयार्त्यार्हरण
तस्त्वमस्माकमुभयसाधने कर्मणि नियोजयितु नार्हसीति
तस्मात् करपङ्कज, हे आर्तबन्धो धर्मभङ्गभयार्तिनाशक,
कामाग्नितापित, किंकरीणा दासीनामपि, किमुत सतीन
शिर स्वपि ना निधेहि, किमुत स्तनेषु नो निधेहीति । यद्व
भयार्त्तिहरणायाभिजातस्य तस्य तव तद्द्वारहरणादिना
नोचितमिति भाव । यद्वा, बलात्कारेण यद्यस्मान् स्पृश
प्राणान् वय त्यक्षामस्तेन सर्वेषा भयार्ती भविष्यतस्तच्च
स्य तव नोचितमिति भाव । हे कामार्त, किंकरीणामपि
लाषरहितानामनर्हेषु स्तनेषु शिरःसु च करपङ्कज न निधे
द्वा, या न किंकर्यस्तासा तप्तस्तनेषु करपङ्कज निधेहि । उ
क्तिमद्वाक्य सलाप इति कीर्त्यते * इत्युक्तत्वात्, स्वागत
एतदन्त प्रकरण सलापाख्योऽनुभाव ॥

निवृत्तिपक्षे, किञ्च, जगत्कारणत्वेन प्रतिपादितो भ
र्वाधिष्ठानभूतोऽतस्त्वय्यभयस्तस्य प्रतिपादन त्वत्प्रतिपाद
शयेनाहु ॥ भगवान् देव स्वयम्प्रकाशचिदानन्दस्वरूप
च म त्रवर्ण , एको देव इति । अत एवादिपुरुष । सोऽ
बहु स्यामित्यादि । जगत्कारणत्वेन प्रतिपादितोऽभिजा
श्च त्यच्चाभवत्, तत् सृष्ट्वा तदेवानुप्राविशदित्यादिना
पापघ्नत्वेन निरूपितो यथा सुरलोकगोप्ता तथा व्रजस्य का
त्मकस्य वेदस्य भयार्तिहरोऽपीति व्यक्त निश्चितम् । यद्वा, य
ादिपुरुषो देवो भगवान् वामनादिरूपेण सुरलोकगोप्ताऽभि
तथा मत्स्यरूपेण व्रजभयार्तिहरोऽप्यभिजात इति व्यक्तम्
यद्, वाल्मीकितवेदभयार्तिहरणार्थं कृष्णद्वैपायनादिरूपेण

कामित्यर्थः । यस्मादेव तत् तस्मात् करपङ्कजम् । करोतीति
। करशब्देनाज्ञानमुच्यते । तल्लक्षणात् पङ्काज्जातमधिका
रण नोऽस्माक श्रुतीना शिर सु शिरोभागेषु वेदान्तेषु
द्विचारार्थं मवर्तय । यथा तन्नस्तनेषु ब्रह्मपरत्वाभावप्रतिपा-
प्तषु स्तनस्थानीयेषु कर्मोपासनद्वारा ब्रह्मपरभागेषु च
वेदैश्च सर्वैरहमेव वेद्य इत्यादिप्रेरणेनेति भावः । यतो
अपि भवतः किंकर्यपरत्वय्येव तात्पर्यवत्यो, भवाँ-
स्तत्तद्रादिभिरसुरैश्च दत्तपीडानामस्माक ससारार्तानां
च व धुरतो योग्यमिदमिति सबोधनाशयः ॥ ४१ ॥
. किं वृत्तमित्यपेक्षायामाह ।

श्रीशुक उवाच ॥

इति विक्लवित तासा श्रुत्वा योगेश्वरेश्वर ॥
महस्य सदय गोपीरात्मारामोऽप्यरीरमत् ॥ ४२ ॥

इति ॥ इत्युक्तप्रकारेण तासा त्रिविधाना गोपाङ्गनाना
प्रेमपारवश्यमिलितप्रार्थनोपालम्भनिषेधरूप भाषित श्रुत्वा
ाभिलाष पूरयित्वा महस्य महासेनापि वैकल्यमुत्पाद्य । यद्वा
भवतीभिरित्यपि तदुक्तानुमोदने रत्याख्यभावव्यञ्जनाय
सित्वा । यद्वा, महासेनाऽभिज्ञा प्रति—युष्मन्निष्ठया प्रीत्या-
प्रसन्नोऽस्मीति । अभिज्ञा प्रति—अहोऽप्येकस्मिन्नेव दिने
तेनाऽवहित्थाभावेन ता भवत्यो लज्जाया श्राद्ध कृतवत्य
ानिनी प्रति, अहो अतिकठिना भवत्यो, जित युष्मा
सूचयित्वा सदय यथा भवति तथा, गोपीररीरमत् रम-
अभिज्ञापक्षे, सदय सकरुणम् । अनभिज्ञापक्षे, सस्नेह
निनीपक्षे, सन् अयः शुभावहो विधियत्र तद् गोपीररम

यदित्यनेन तासां मनोरथानुसारेण भगवान् प्रेष्ठ आसक्त इत्ये
प्रतीत सन् रमयामास, स्वयं त्वसक्त एवेति सूचितम् । पूर्णकामस्य
ऽसङ्गनिर्विकारस्य परमात्मनो रमणे दयैव हेतुर्न तु कामेनेति बोधना
सदयमित्युक्तम् । आत्मारामोऽपीत्याश्चर्यबोधनाय । अहो तार
प्रेमप्रावल्यम् । साकाङ्क्षात्मारामवशीकरणगुणगणोऽपि स्वयम
त्मारामोऽपि ताभिर्वशीकृत इति । ननु आत्मनि आराम क्रीः
यस्य तस्य निरिन्द्रियस्याऽनङ्गस्यैकस्य असंख्याताभिस्ताभि
कथं रमणं सम्भवतीत्याशङ्क्याह ॥ योगेति ॥ योगाः सौभग्य
दयस्तेषामीश्वरः रुद्रादयस्तेषामपीश्वरः । तथा अघटितघटन
समर्थ अज्ञानिप्रतीत्यनुसारेण प्रपञ्चभानवत् तत्प्रतीत्यनुरोधेन र
णोपकरणभानस्याप्यविरुद्धत्वादिति भावः । यद्वा, अरीरमदां
वस्तुत आत्माराम एव । यतो, योगेश्वरेश्वरः । यद्वा, ताभिः रम
णोऽप्यात्मस्वरूपाभिस्ताभिरारामस्तत् क्रीडा यस्येति, न तस्य लौकि
रमणमिति भावः ॥

निवृत्तिपक्षे, इति यथोक्तप्रकारेण तासां श्रुतीनां सदैव य
र्थितं श्रुत्वा, प्रेष्ठस्य प्रसन्नो भूत्वा, सदयं यथा स्यात् तथा आत्
रामोऽपि स्वस्वरूपानन्दचिदानन्दस्वरूपत्वात् प्रमाणप्रत्यययोग्योऽ
गोपी श्रुतीररीरमत् । अनन्तरसद्वारा तद्विषयतामगच्छत्
यतो योगेश्वरस्य सकलजगत्सृष्ट्यादिसमर्थस्याव्याकृतस्य माय
ब्रह्मरुद्रादिपालनस्येश्वरः । तथा च । जगज्जन्मादिकारणत्वम
पादनेन श्रुतयो मयि पर्यवस्यन्तीत्यविकारिचेतसि दृढतरनिश्च
मुत्पादितवानिति भावः ॥ ४२ ॥

रमणप्रकारमाह ॥

ताभिः समेताभिरुदारचेष्टितः
प्रियेक्षणोत्फुल्लमुखीभिरच्युतः ॥

रहासद्विजकुन्ददीधिति-
ोचतैणाङ्क इवाडुभिर्वृत ॥ ४३ ॥

भिरिति ॥ यथोडुभिस्ताराभिर्वृत एणाङ्क पूर्णच द्र शो-
र ताभिर्वृतोऽच्युतो व्यराचत । विशेषेण शोभित । अनेन
। अन्यो यापेक्षया शोभावत्त्वम् । गोपीना त वीत्व, स्वर्ण
व्यज्यते । ताभि समीपमागताभिरादौ समेताभिर्मिलिता
ॅश्च ॥ उदारचेष्टित ॥ उदाराणि अलौकिकानि निर्मलानि
रफलदानि चेष्टितानि करस्पर्शनपुष्पार्पणकटाक्षादिरूपाणि
तस्य तादृशचेष्टितैस्तासा रसोदयमाह ॥ प्रियकर्तृकमीक्ष
र्तृक वा तदीक्षण तेनात्फुल्लानि प्रकसितानि मुखानि
। अनेन भगव मुखस्य च द्रत्व, त मुखाना कुमुदत्व बो-
अथ भगवतोऽपि रसोदयमाह ॥ उदारो हासो यस्या स्तु
णकु दपुष्पकान्तिर्यस्य स । उदारहासेन द्विजकु देषु दी
ेति वा । तादृशीभिस्ताभि', मनस्यपि रसोदयेऽपि च्यु-
ेति ज्ञापनाय अच्युत इत्युक्तम् । यद्वा, तथान्वयेऽपि स्व-
मच्युत एवासीदित्यच्युतपदेन वनितम् ॥
दृत्तिपक्षे ताभि सर्वाभि. , गतिसामा यादिति न्याया
ाद्वितीये ब्रह्मणि तात्पर्येण समन्वितााभि श्रुतिभि । उ-
सृष्टिकर्तृत्वादीनि चेष्टितानि यस्य स । प्रियध्यानन्दरू-
ात्मन ईक्षणाय तद्विषयकप्रेमोत्पत्तये उत्फुल्लानि निकमि-
ातिपादनो मुखानि मुखस्थानीयानि पदानि यासा ताभि ।
ो हास = महामाया । हासो जनो मादकरी च माया * इ-
र । स्नेहकला द्विजानि * इत्युक्तत्वाद्, द्विजपदेन स्नेह-
यते । स्नेहकलालक्षणा द्विजा द ता यस्य, स च ऽसौ

कुन्दो मुकुन्दः । स एव दीधिति प्रतिमारूपापन्ना कीलिर्यस्य स । कुन्दो माध्ये मुकुन्दे च भ्रमिनिध्यन्तरे पुमानिति मेदिनी कुमुदः कुन्दरः कुन्द इति भारते ॥ ४३ ॥

अथोदारलीलाभिर्वनमपि शोभयन् व्यचरदित्याह ।

उपगीयमान उद्गायन् वनिताशतयूथप ॥
माला बिभ्रद् वैजयन्तीं व्यचरन् मण्डयन् वनम् ॥ ४४

उपगीयमान इति ॥ ताभिरुप समीपे गीयमानः । भक्तपराधीनत्वप्रेयसीजनमनोऽनुरञ्जकत्वमानवतीमानोद्दीपकत्वादिगुणगणलङ्कृतकृष्णनाम्ना पुनः पुनर्गीयमान, स्वय च शरच्चन्द्रादिमगोपीजनप्रेममय च गीतमुद् ऊर्ध्वब्रह्मलोकपर्यन्तगामि गीत गायः तदुक्त विष्णुपुराणे— कृष्णः शरच्चन्द्रमस कौमुदीकुमुदाकरम् : जगौ गोपीजनस्त्वेक कृष्णनाम पुनः पुनरिति । ततश्चानुरक्तस्त्रीशतयूथपस्तत्पतिः कामिनीरत्नाना पालक इति वा, तदधरपानकर्त्तेति वा । पुनश्च, वैजयन्ती मुक्तामाणिक्यमरकतेन्द्रनीलवज्राख्यरत्नरचिता स्वाभाविकीमैश्वर्यबोधिका कीर्त्तिमयीम् । पञ्चवर्णा वैजयन्तीति वचनात् । पञ्चवर्णपुष्पग्रथिता वा मालां बिभ्रद् वनमेतत् सर्वं मण्डयन् अलङ्कुर्वन् व्यचरत् तासा कामोद्दीपनाय लीलागतिं कृतवान् । वनान्तर गतवानिति वा ॥

निवृत्तिपक्षे, उपगीयमानो मुनिभिः, स्वय च कृष्णादिरूपेण मत्तः परतर नाऽन्यत् किञ्चिदस्ति धनञ्जय ॥ मयि सर्वमिद प्रोत सूत्रे मणिगणा इव । क्षेत्रज्ञ चाऽपि मा विद्धि सर्वक्षेत्रेषु भारत अनादिमत्पर ब्रह्म न सत्तन्नासदुच्यते । इत्यादिना स्वात्मानमुद्गायन् वनितास्थानीयश्रुतिशतयूथपस्तदर्थत्वात् तत्पतिः तथाच सूत्रस्मृतिश्रुतिलक्षणप्रस्थानत्रयगम्य इत्यर्थः । तत्त्वमः

मःला बिभ्रत् तदवच्छिन्न सूक्ष्मत्वादिरूप. स. । पञ्चरूपा ला वैजय ती गदाभृत ॥ सा भूतहेतुसघाता भूतमाला च । विष्णुपुराणे । अ त.करणलक्षण व न मण्डयन् व्यचरत् । दूरत्तिषु स एवाऽस्फुरदित्यर्थ ॥ ४४ ॥

नद्या पुलिनमाविश्य गोपीभिर्हिमवालुकम् ॥
रेमे तत्तरलानन्दिकुमुदामोदवायुना ॥ ४१ ॥

श्च नद्या श्रीयमुनाया' पुलिनमाविश्योपविश्य तस्योप-यतामाह ॥ हिमवालुकम् ॥ हिमवालुक कपूरस्तद्वद्वालु- । शाकपार्थिवादित्वत्समासः । तस्या नद्यास्तरलैस्तरङ्गैरा- स्तत्कर । स चाऽसौ कुमुदामोदवाँश्च वायुस्तेनोपलक्षि- मानन्दीति मान्द्यम् । शैत्यसौरभ्ये स्पष्टे । यद्वा, यथोक्तवा- ना हिमवालुकम् । यद्वा, तत्तरलानन्दीति पृथक् पद पु पणम् । तत्रोपविश्य गोपीभि. सह रेमे । जुष्टमिति पाठे कारेति परेणान्वय. ॥

ध्यात्मपक्षे, नद्या बुद्धिलक्षणाया', पुलिन सात्त्विक प्रत्ययमा- विश्य तत्तदारुह्येति यावत् । ना पुरुष परमात्मा गोपी- तेभि सह रेमे तदुक्त भगवता । तेषामेवानुकम्पार्थमहम- तम ॥ नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेति । त भिकाङ्क्षालक्षणतापस्य निवृत्तत्वाद्धिमवालुकस्थानीय शा- त एव, तस्या नद्यास्तरलास्तृष्णादिलक्षणास्तरङ्गास्तत्तर- ान्ततरलैरानन्दि आनन्दाविर्भावसाधनम् । यत. कुमु- ासु, कु पृथिवी भारावतारणादिना मोदयतीति कुमुद प कुमुदपुष्पस्थानीय । तत्सम्बन्धिहर्षो गन्धस्थानीय. । तद्यु स्थानीयो निरूढः प्राणवायुर्गत्र तत् ॥ ४५ ॥

एवं सर्वप्रकारेण तासां जातस्मरकेलित्वं सम्पाद्य सोपकरं रसविलासचरित्रमाह ॥

बाहुप्रसारपरिरम्भकरालकोरु
नीवीस्तनालभननर्मनखाग्रपातैः ॥
क्ष्वेल्यावलोकहसितैर्व्रजसुन्दरीणा
मुत्तम्भयन् रतिपतिं रमयाञ्चकार ॥ ४६ ॥

बाहुप्रसारेति ॥ तत्राष्टविधालिङ्गनमादौ दर्शयति । दूरे स्थिताऽवयवविशेषं स्वयं बाहुप्रसारस्ततो बलादपि परिरम्भ आश्लेषस्ततः करादीनामालभना यालिङ्गनानि । तत्र कराऽऽलभनं हस्ते हस्तग्रहणम् । एवं कचोन्नयनार्थम् अलकानां स्पर्शः । बाहुबन्धार्थमूरुस्पर्शः । रसोद्गमनार्थस्तत्तत्क्षतताडनादयः कामयुद्धनिरूपकाः । नखक्षतादिभिस्तत्तत्स्थाने स्थितस्य कामस्योद्बोधायाभिधानात् । क्ष्वेल्या मर्म्ताभनादि । तत्पूर्वकान्येवावलोकनानि हसितानि च तैः रसस्थापकर्व्रजसुन्दरीणां रतिपतिं कामम् उद्दीपयः रमयाञ्चकार । ता रमयामास । स युक्तः कामो रतिपतिर्वियुक्तस्वप्निरूपः ।तत्राऽपि तासां सुखमेव प्रकटितवान् । न तु कामः तेः विरतिमुत्पादितवानिति भावः ॥

निवृत्तिपक्षे, अविवेकावस्थाया बाहुप्रसारादिभिर्जातो यो रतिपतिः कामस्तमुत्तम्भयन् नमयन् व्रजसुन्दरीणामुपनिषदः । कर्मणि षष्ठी । रमयाञ्चकार । अधिकारिचेतसि कामनिवृत्तिपूर्वकनिबोधितमखण्डैकरसानन्दस्वरूपमात्मानं प्रकटितवानिति भावः ॥ ४६ ॥

एवं संयोगशृङ्गारमुपपाद्य, न विना विप्रलम्भेन संयोगः पुष्टिमश्नुते * कषायिते हि वस्त्रादौ भूयान् रागोऽभिवर्द्धते इ

नोक्तत्वात् तत्पुष्ट्यर्थं विप्रयोगमुपपादयितु पीठिका
॥

भगवत कृष्णाल्लब्धमाना महात्मन ॥
मानमेनिरे स्त्रीणा मानिन्योऽभ्यधिक भुवि ॥ ४७ ॥

मिति ॥ एव पूर्वोक्तप्रकारेण भगवत सर्वदानसमर्थात् स
स्वरूपात् कृष्णात् परिपूर्णत्वेन न्यूनतामात्रिरहितत्वान्महा
यो मान आदरो याभिस्ता सत्य । सम्प्रति मानवत्यो
भुवि स्त्रीणा समाजम ये प्रत्येक मर्वा एवात्मानमऽभि स-
ाधिक च मेनिरे । स्त्रय प्रतिगर्वितमानसा बभूवु । द
व एकत्र सतोरप्यनुरक्तयो ॐ स्वाभीष्टाश्लेषप्रतीक्षादिवि-
न उच्यते । अहेरिव गतिः प्रेम्ण स्वभावकुटिला तत ।
ोऽन्यथा यू तिर्मानोदय उदीरित । तथाचास्मत्समाना सती
स्वतोऽस्मान् यदि प्रार्थयिष्यति तदा रस दास्यामस्तथा स
र्थनया यथा भगवानस्मद्दशने जातस्तथा तत्प्रार्थनया वय-
ष्यम इति रसार्थमेव भावो, न तु दोषरूप । भगवज्ज्ञानन-
ना दिति भाव ॥

इतिपक्ष, इत्थ प्रत्यगभिन्नस्य परमात्मन औपनिषदत्व प्र
ताभिरपि दुर्ज्ञेयतयैव प्रतिपादितमिति बोधयितु दुर्ज्ञेयता-
मुपक्रमत ॥ एवम् उक्तप्रकारेण प्रतिपादिताद्भगवतो निर
त कृ णाच्छुद्धात् सच्चिदान दरूपा महात्मन प्रत्यग-
परमात्मनो ल व मान प्रामाण्य याभि । ततश्च, अस्य
तस्य नि श्वसितमेतद् यदृग्वेद इत्यादिश्रुत्या स्त्रीणा
भुवि ज मभूमो परमात्मनि प्रामाण्यवत्य सत्य , आत्मान
निर इत्यर्थ ॥ ४७ ॥

तासां प्रसादाय तत्रैव तत्तदन्तःकरणवृत्तिष्वेवान्तरधीयत प्रत्ययसाक्षित्वेनैवावगन्तु शक्यता प्राप्त इत्यर्थः । तथाच यदि मन्यसे सुवेदेति दहरमेव न तत्त्व वेत्थात्मनो रूप नो न इ च, अविज्ञात विजानता विज्ञातमविजानता, मतित्त स तमित्याद्या। अत्र ब्रह्मणो दुर्बोधत्व, श्रुत्येकगम्यत्व, साक्षित्वेन वेद्यत्व च दर्शितम् ॥ ४८ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थ
श्रीपादशिष्यदत्तवशावतंस–रामकुमारसूनु-
धनपतिसूरिकृताया श्रीभागवतगूढार्थ
दीपिकाख्यव्याख्याया दशमस्कन्धे
एकोनत्रिंशोऽध्यायः
॥ २९ ॥ १ ॥



रासपञ्चाध्यायीव्याख्याया गूढार्थदीपिकायां
द्वितीयोऽध्यायः ॥ २ ॥ ( ३० ) ॥

े विरहसन्तप्तचेतसा गोपयोषिताम् ॥
ायत्वमुखप्रश्नमुखलीला निरूप्यते ॥ १ ॥

: भगवद न्तर्धानान तर जाता दशा वर्णयिष्यन्नादौ रसा
वत्तानां भगवत्सम्बीनाम् अकस्मात् प्रेष्ठादर्शनज य महा
॥

श्रीशुक उवाच ॥

अन्तर्हिते भगवति सहसैव व्रजाङ्गना ॥
अतप्यंस्तमचक्षाणा करिण्य इव यूथपम् ॥ १ ।

तर्हित इति ॥ भगवति पूर्णाऽखिलैश्वर्यसम्पन्ने परम
सहसैवाकस्मादेवा तर्हितेऽदर्शन गते, सहसैव त भगवन्तम
मपश्यन्त्य. सहसैवातप्यन्त निःसीमसन्तापवत्यो जाताः
मैव प्राप्ता सार्वभौमश्रिय सहसैवाचक्षाणो यथा सतप्यं
ता व्रजाङ्गना बालभावमारभ्य तस्मिन्नेवासक्तस्वान्ता इ
यद्वा, अ तर्हिते अ तर त'करण एव तासा प्रविश्य स्थि
बहिस्त भगवन्तमचक्षाणा बहिर्मुखवदन्तश्चाचक्षाणा अत
पता व्रजाङ्गना अ तर्विचाराकुशला इत्यर्थः । नच तास
न स्थितम् । कात्मात्मना दर्शनादिना क्षा तोपलम्भात्
ा परमप्रेमवतीना दर्शनस्पर्शनादिकमेव मुख्यमिति द्यो
ष्टान्तम ह ॥ करिण्यो हस्ति यो यूथप महामत्तगजमचक्षा
तप्यन्ति तद्वत् । करिणीना यथा गजदर्शनाद्यभावे हे
त तथा नाऽ यासामित्यतस्ता एव दृष्टा तीकृताः ॥

ाद्वृत्तिपक्षे, अथ विजानतामविज्ञातत्वात्तदपेक्षया अन्तर्हिते
सहसैव त परमात्मानम् अचक्षाणा साक्षात्प्रतिपादयितु-
स्वज यद्वृत्तिप्रतिफलितचैत येन विषयीकर्त्तुमशक्ताश्च
ाः श्रुतयोऽतप्यन् । तप्ता बभूवुः ॥ १ ॥
पानन्तर जाता तासा दशामाह ।

गत्यानुरागस्मितविभ्रमेक्षितै-
र्मनोरमालापविहारविभ्रमै ।
आक्षिप्तचित्ता प्रमदा रमापते
स्तास्ता विचेष्टा जगृहुस्तदात्मिका ॥ २ ॥

येति ॥ रमापतेः प्रेष्ठस्य गत्या स्वाभाविकेन नूपुरस्वनयु-
न्यासेन, अनुराग स्नेहस्तत्पूर्वक मन्दहसित तत्सहितो
तत्सहितानीक्षितानि कटाक्षास्तै ।
ो रमयति, मनसि रमते च य आलापो गुह्य भाषण वाचिक
। विहारा श्रृङ्गारचेष्टा । चित्तवृत्त्यनवस्थान श्रृङ्गाराद्
मत * इत्युक्तलक्षणो विभ्रमश्च । तैराक्षिप्ता याकृष्टा-
ानि यासा ता । अतस्तदात्मिकास्तन्मय्यो, यतश्च प्र-
कृष्टमदयुक्ता, रमापतेर्विविधाश्चेष्टा जगृहुस्तदनुकरणैर
पर्थ । अत्रानुरागचित्तवृत्त्यनवस्थाने मानसे, आलापो
, गत्यादयः कायिका । अ यभावानामप्युपलक्षणमेतद् ।
ापक्षे, रमापतेर्लक्ष्मीपते श्रीविष्णोरन्तरेवाविर्भूतस्वरूप
या सह विलासरूपा स्वात्मना च सह विलासरूपा या-
जगृहु । ननु दासीना तासां भगवल्लीलाऽनुकरणमनु-
ाशङ्कानिवृत्त्यर्थमुक्त— तदात्मिका ॥स भगवानात्मनि आ-
यासां ताः । अतस्तापनिवृत्त्यर्थ तल्लीलाग्रहण न विरुद्ध

त इति भावः । किञ्च, प्रमदाः । तथाच प्रमदहेतुकदासीभाव
हाय का ताभावस्तथा प्रभुचेष्टानुकरणमपीति भावः ॥ उ
भिज्ञापक्षे रमापतेः सर्वसौ दर्ग्यसम्पत्तिस्वामिनः ॥ मानिनीप
गतश्चेद् गच्छतु नाम, वयमेव तदीयास्ताश्चेष्टाः कर्तुं शक्ता
बहिः प्रकटीकर्तुं तास्ताश्चेष्टा जगृहुः । यतस्तदापि प्रकृष्टो
यासा ताः । यतश्च, तदात्मिकाः परस्परमतिगाढप्रेमवशादभेदा
मानवसः । अ तस्तस्य गत्यादिभिराक्षिप्तचित्ताः ॥

निवृत्तिपक्षे, श्रोत्रस्य श्रोत्र मनसो मनः वाचो ह वाक्
प्राणस्य प्राण इत्यादिश्रुतयश्चेतनाद्यधिष्ठितैर्गत्यादिभि॰ परमा
न प्रत्याकृष्टचित्ता' । यतः प्रकर्षेण मदः परमात्मप्रतिपादने
यासा ता॰ । रमापतेः सत्तास्फूर्तिलक्षणशोभास्वामिनश्चैतन्यस
तास्ता गमनादिरूपाश्चेष्टा जगृहु । स्वय वाच्यवाचकयोरभेदा
तदात्मिका' ॥ २ ॥

तदात्मिका इत्युक्त भगवत्स्वरूपपरिग्रहमाह ।

गतिस्मितप्रेक्षणभाषणादिषु
प्रिया प्रियस्य प्रतिरूढमूर्त्तय ॥
असावह त्वित्यबलास्तदात्मिका
न्यवेदिषु कृष्णविहारविभ्रमा ॥ ३ ॥

गतीति ॥ प्रियस्य गत्यादिषु प्रतिरूढा मूर्तिर्यासाम् । भगवद्ध
स्वात्मन्येवारोपितवसः । यतः प्रियाः । तथापि मनसा प्रति
मूर्तयो, न तु नटवत् तत्तद्वेषादिक धृतवत्यो, यतोऽबलास्त
बलरहिता' । अतस्तदावेशवशात् तासां तथात्वमित्याह ॥ तद
कास्तत॰ कृष्णविहारविभ्रमाः ॥ कृष्णस्येव विभ्रमाः क्रीड

ासा ताः । अतो योऽन्विष्यतेऽसावहमिति परस्पर निवे-
। न तु वय व्रजास्त्रिय इति मनागपि काश्चिदपि जानन्ति
। कृष्णविहारैः स्मर्यमाणैर्विभ्रम उ मादो यासामिति वा ।
ानुभावोऽयम् । समानमिद पद्यमितरपक्षयोरपि ॥
ट्तिपक्षे, गत्यादिषु देहेन्द्रियव्यापारेषु या. प्रियास्तत्त
त्तयस्ता प्रियस्यात्मनः प्रतिरूढा आत्मन्यारूढा मूर्तयो
ः । अत एवास्य वासुदेवस्य विभोश्चिदात्मन एव नल
ाशनसामर्थ्य यासाम् । किञ्च, तस्मिन्नारोपितत्वात् तदा-
तत्सत्तातिरिक्तसत्ताविधुरा इति । कृष्णस्य सदानन्द
। परब्रह्मणः सत्तास्फूर्तिप्रदानृत्वादिलक्षणविहारे, तद्गणने
यासा ताः श्रुतयो न्यवेदिषु' बोधयामासु । तथा अ-
त्माऽहमेवेति न्यवेदिषुरित्यर्थः । तथाच श्रुतयः । यद्वाचा-
ित येन वागभ्युद्यते, यन्मनसा न मनुते येनाहुर्मनो मत,
न पश्यति येन चक्षुरपि पश्यति अह ब्रह्मास्मि, योऽसा-
पुरुष. सोऽसावहमित्याद्याः ॥ ३ ॥

त प्रयता प्राप्ताना लीलामुपवर्ण्य पुनः प्राप्तस्वशरीरा-
नाना चेष्टामाह ॥

गायन्त्य उच्चैरमुमेव सहता
विचिक्युरुन्मत्तकवद्वनाद्वनम् ॥
प्रच्छुराकाशवदन्तर बहि-
र्भूतेषु सन्त पुरुष वनस्पतीन् ॥ ४ ॥

यन्त्य इति ॥ अहो येन वय रमिताः स प्रेष्ठ इदानी क ग-
विचिन्त्य सहता मिलिताः प्रथम प्रेष्ठमेव गायन्त्य एव । य-

था वय तदीयकलगीतमाकर्ण्य झटिति तत्समीपमागतास्तथास्मद्गी
तमाकर्ण्य सोऽप्यास्वऽस्मत्सन्निधावायास्यतीत्याशयेन तथा जाताः
ततोऽनागते प्रेष्ठे उ मत्तकवद् वनाद्वन विचिक्युः । अस्मिन् व
प्रेष्ठ' स्यादित्याशयाद् तत्र वने प्रतिवृक्षादिकम वेषण कृतवत्यः
अ वेषणेनाप्यलब्ध प्रेष्ठ वनस्पतीन् उ मत्तकवत् पप्रच्छुः । सर्वः
पूर्णत्वात् तद्व्यतिरिक्तस्य सर्वस्याप्यनिरूपणाच्च तदन्वेषणत्प्रश्न
यो, परमोन्मत्तचेष्टितत्वमित्यभिप्रायेणो मत्तकवदित्युक्तम् । भया
तिशयद्योतनाद् वा । आकाशवद् भूतेष्वन्तर्बहि' स'तम् । अत ए
पुरुष पूर्ण सर्वात्मानम वेषणाद्ययोग्यमित्यर्थ ॥

निवृत्तिपक्षे, आकाशवत् सर्वगतश्च नित्य , स त्य ज्ञानमनन्त
ब्रह्मेत्येवममुमेवाकाशवदन्तर्बहिश्च भूतेषु स'त पुरुष गाय'त्य , सो
ऽ वेष्टव्य इति त विचिक्युस्तस्या वेषण प्रतिपादयामासुः । त
था, गुहाहित गह्वरेष्ठ पुराणम् इत्य'तःकरणलक्षण वा वन वन
स्थितम् ॥ उ मत्तकवदिति ॥ सुखरूपात्मविशिष्टम त'करण वन त
स्माद् वनाद्वन तद्वृत्तिविशिष्टादितरवृत्तिविशिष्ट, तथात्मा विजिज्ञा
सितव्य इति प्रश्नपूर्वक विचार, वनस्पतीन् अ त'करणवनस्पतीन
सत्त्वगुणादीनुद्दिश्य बोधयामासुरित्यर्थ. ॥ ४ ॥

तत्कृतप्रश्नान् प्रपञ्चयति ॥

दृष्टो व कच्चिदश्वत्थ प्लक्ष न्यग्रोध नो मन ॥
नन्दसूनुर्गतोहृत्वा प्रेमहासावलोकनै ॥ ५ ॥

दृष्ट इति ॥ तत्रादौ विष्णुप्रजापतिरुद्रावतारभूता एते
अश्वत्थादयोऽस्य पश्येयुरत एते प्रष्टव्या इत्याशयेनाश्वत्थादीन्
पृच्छ'ति ॥ हे अश्वत्थ, हे प्लक्ष, हे न्यग्रोध, वो युष्माभि कच्चित
कि न दृष्टनुर्दृष्टः । न देन परमभक्तेन ज मान्तरे आराध्य पुत्रत्वेन

अस्मदनुग्रहाय वा तत्पुत्रत्वेन प्रकटित. । अत एव नो-
मन प्रेमहासावलोकनैर्हृत्वा गत.=अन्तर्हित. । यद्यपि स
ग्रामस्तथापि नन्दसूनुत्वेनास्माक प्रेष्ठोऽतस्तद्भूयोऽन्विष्य
माभिर्दृष्टश्चेत् तर्हि करुणया वक्तव्य । त लब्ध्वा सुखिन्यः
ति भाव: । यद्वा, ननु विष्णु. कथ चौर्य कृतवानित्या
ासाय न दसूनुरित्युक्तम् । तथाच यथा दधिदुग्धादि
ंस्तथा मनोऽपीति भाव । ततस्तेभ्य उत्तरमलब्ध्वा
लक्ष्मीसस्थानभूत., पशुना देवा. स्वर्गलोकमायन्, तस्य
त्वा मेद: प्रक्षारयन् स प्लक्षोऽभवादिति श्रुतेरयमपि प्लक्षो,
मज्ञानहेतुरेव, नितरामग्राण्यधोभूतानि यस्येत्यधोदृष्टि र्यग्रो
त एते न वदिष्यन्तीति विचार्य्यान्यत्र गता ॥ अनभिज्ञा
तुच्चतरत्वादेते दूरतरचरमप्यस्मत्प्रेष्ठमवश्य पश्येयुरिति सम्भा
ाति ॥ दृष्ट इति ॥ किमर्थ पृच्छ्यत इति चेत् तत्राहु' ॥
साधो: सूनुर्नोऽस्माक स्त्रीजनाना प्रेम्णा सर्वलोकमोहनो
पेण साहतैर्हासावलोकनेभृत्येश्चौर्य्यकर्म्मकुशलैर्विहृतनेत्रा
: त करणलक्षणान्त. प्रत्रेष्टु समर्थमनोरत्नमञ्जूषा चोर
लायितोऽतस्त पृच्छाम इत्यर्थ' । तत उत्तरमलब्ध्वा, महृ
वाद्याभिमानादेतेऽस्मान् क्षुद्रा. प्रति अवज्ञया न कथयेयु
चार्य्या यत्र गता ॥ मानिनीपक्षे, एत सर्वलोकपूज्या:
इत्याशयेन पृच्छन्ति ॥ दृष्ट इति ॥ दृष्टश्चेद् वक्तव्य' । य
नो हृत्वा, न त्वस्माभिस्तस्य मनो दत्तमिति भाव । ननु
स्य मनो बलात् कथ हृतवानितिचेत् तत्राहु ॥ प्रेमेति ॥
ित्यादिवचनैराविष्कृतेन प्रेम्णाऽ त प्रवेशो, हासेन ग्रहण
नेन हरणम् । ननु तदुपरि भवतीभिर्विश्वास' किमर्थ कृत
तत्राहु ॥ न दस्य सर्वान दप्रदस्य परमविश्वसनीयस्य

ःसमन्य सुखमेव दास्यतीति मत्वा विश्वास. कृत इति
ोऽलब्धोत्तरा क्षण स्थित्वा, अहो किमेताभिरित्यस्मान
ब्धा. मत्युत्तर न ददते तदलमेतै. क्षुद्राभक्ष्यफलैःमफुल्लै
र तिष्ठति । न्यग्रधो रुणद्धि । रुधिर् आवरणे । प्लक्षत्य
र्थे. । तत्त्यात् मष्ट्रमयोग्यैश्च बहिरत्यन्तकठोरै , परोपव
ानभिज्ञैर्भूतावासयोग्यैरिति विचार्य्यान्यत्र गताः ॥
ग्रत्तिपक्षे, गुणा न विदुरात्मानमित्युक्तत्वाद् गुणाच्च
वष्कुर्वन्ति ॥ दृष्ट इत्यादिना ॥ अश्वत्थादिपदैः सत्त्व
भिधा गुणा गृह्यन्ते । नोऽस्माक प्रेम मसन्नतापूर्वक
नैः श्रवणादिरूपैर्मनो हार्द हृत्वा उद्धृत्य, न दः = आ
सूनुः=अर्कश्च । आनन्दस्वयम्प्रकाशरूप' परमात्मा
ः स युष्माभिर्दृष्ट. कच्चित् । भवद्भिरमकाश्य इति
तु' पुत्रेऽनुजेऽर्के नेति मेदिनी ॥ ५ ॥
। कुरवकादीन् दृष्ट्वा एते महान्तः पुष्पवन्त' सगन्धा म
ाभिरनिश सेव्यमानाः शुद्धा त'करणाः कथयिष्यन्
पृच्छन्ति ।

त् कुरवकाऽशोकनागपुन्नागचम्पका ॥
नुजो मानिनीना गता दर्पहरस्मितः ॥ ६ ॥

चदिति ॥ कुरवक. शोणाऽम्लानः । नागो नागकेसर
ादय । रामानुज कच्चिदितो गतः । अनेन मार्गेण गच्
ऽपि दृष्ट' स्यादिति भाव । रामावतारे कृताया. सेवार
नायास्मिन्नवतारे स्वीय नाम, ज्येष्ठत्व च लक्ष्मणाय
स भक्ता अस्मॉस्त्यक्तुमयोग्यास्त्यक्त्वा गतोऽत. पृच्छ
माद् दृष्टश्चेत् कृपया वदतेति रामानुजपदाशय. । करुण

ापि भगवान् कठोरचित्तक्षत्रियजात्युत्पन्नत्वात् स्वभाव
नस्मत्प्राणहरचेष्टो जात इति वा तदाशय । यद्यपि तेन र
पस्माकं मान उत्पन्नस्तथापि तन्निगमार्थम तर्जान नोचि
तो दर्पहर स्मित यस्य स. । तथाच मिष्टोषप्रदानेन
त्तिसम्भवे विषप्रदान नोचितम् । अक्क चन्मधु विन्देत कि
त व्रजेदिति न्यायात् । अतस्तद न्याय विचार्य वक्तव्य
वः । तेभ्योऽलब्धोत्तरास्तदैवाकस्मिकेन वायुना चालि
वाँस्तानालक्ष्य, अहो शिरोधूननेन, वय न जानीम इति सू-
ोऽलमेभि सम्पद्गर्वितैरिति मनसि निधायाऽन्यत्र याता ॥
ापक्षे, अहो किमर्थ गत इति चेद् द्वयैव गत इत्याशयेना
ामानुज. ॥ तथाच, बलभद्रानुजस्य तस्य नास्ति भय
। अतो भयनिमित्तक तद्गमन न सम्भवति । नाऽप्यस्म
ासार्थम् । तस्य स्मितमात्रेणैव सुकरत्वादित्याहुः ॥ दर्पे
तथाच स्मितादिस्मृतिमात्रेण हृतमानास्तद्वियोगे क्षणमपि
ाशक्ता अन्वेषयाम पृच्छामश्च । अत कृपया वदतेति
तभ्योऽप्यलब्धोत्तरा , अहो अय कुरवक । अतिमकर द्
लीना कुत्सित ईषद्वा रवो यत्र स. । यद्वा कुत्सिताद्रोदन
क सुख यस्य स रोदनप्रिय. । अशोक. शोकरहित. । पी
त्वाद् दयावर्जितः । नागोऽय नाम्नैव भयानक । अय तु
नाग. । चम्पकोऽपि परिणामविरसस्तस्मादेते न प्रेष्ठ
स्मान् सुखयिष्य तीति विचार्यान्यत्र गता ॥ मानिनीपक्षे,
शाकौ कामोद्दीपकौ । नागादय कामबाणपुष्पा कामन
न्यत्त कामिन त पश्चाऽप्येते ज्ञास्यन्तीति मत्वा तान्
॥ कच्चिद् गत , किं वा कचिदत्रैव निलीय वर्तते । ननु
न्वेष्यत इत्याशङ्क्यास्मत्सर्वस्वमपहृत्य पलायित इत्याह ॥

मानिनीनां मानैकधनानामस्माकं स्मितादिना दर्पं हृतवान्, नि धनाश्चास्मान् कृत्वा गताऽसौ धूर्ताग्रगण्योऽस्माभिर्द्रष्टव्य इ भाव. । ननु अबलाभिर्युष्माभिः कथं धर्तुं शक्यः इतिचेत् तत्र हु ॥ रामानुज ॥ तस्य ज्येष्ठो भ्राता बलरामोऽप्यस्मदपेक्षया प्रबलस्तस्यायमनुज कथं प्रबल स्यात्। अ यथा पलायनं न कुर्य ादिति भाव. । ततोऽलब्धप्रतिवचना अहो एते पुरुषजातित्वेन कठो चित्ता' कृष्णपक्षपातिनो न कथयिष्यन्तीति मत्वाऽऽ यत्र गता

निवृत्तिपक्षे, कुरवकादिशब्दैः कुरवकादिस्थानीयानामाक शादीनां स्थूलसूक्ष्मभूतानां ग्रहणम् । रामा महामाया अनुजा भ गिनी यस्य स सर्वकार्योपादानमायाधिष्ठानभूत कश्चिद् पुरुष मिरितोऽत्रगत: । स त्वऽस्माकं मानिनीनां तत्र प्रामाण्यवतीनामा दर्पहरं स्मित तत्स्थानीय चराचरात्मकं जगद् यस्य स' । अस्माव मपि सत्त्वासत्त्वाभ्यां वक्तुमशक्यत्वात् । तथाच महाभूतेभ्योऽ पर इति भाव. ॥ ६ ॥

अथा यत्र गत्वा तुलसीं ददृशुस्तत, इयं भगवतोऽतिप्रिया स सदा तन्निकटवर्तिनी स्यात् तज्ज्ञानवती, भगवदीयतया दयावत वक्ष्यति चेति मत्वा तुलसीसन्निधौ गत्वा तां पृच्छन्ति ।

कच्चित् तुलसि कल्याणि गोविन्दचरणप्रिये ॥
सह त्वाऽऽलिकुलैर्बिभ्रद् दृष्टस्तेऽतिप्रियोऽच्युतः॥७॥

हे तुलसि त्वया अच्युतो भगवान् कच्चिद् दृष्ट. । यतस्त्वं क ल्याणी भगवत्प्राप्तिसाधनपुण्यपुञ्जानुष्ठानवती । अत एव गोविन्द चरणौ प्रियौ यस्याः सा, तच्चरणयोः प्रियेति वा । अत एव तव ऽतिप्रियः । अत एवाऽच्युतः । त्वया कदाऽपि न वियुक्त' अत एव त्वामलिकुलैर्भ्रमरसमूहैः सह विक्षेपमप्यगणय्य बिभ्र

वर्त्तते । यद्यप्यऽस्माकमप्यतिप्रियस्तथापि नास्माकं ता-
राण येन कामोपाधिं विना तच्चरणावेवातिप्रियौ भवेता-
नास्माकमच्युतः, किं तु पलाय्यास्मत्सकाशाद् गतः । सर्व-
ल्याणकरी त्वमिति वा । अतो दृष्टश्चेत्तर्हि कथयेति भावः ।
ाप्तोत्तरा, अहो भगवदीयेयं भगवदाज्ञां विना न कथ-
ति मत्वाऽन्यत्र गताः ॥ अनभिज्ञापक्षे, हे तुलसि हे कल्या-
नभगवच्चरणार्पणादिना सर्वलोककल्याणप्रदे यतो गो
: महाविष्णोश्चरणयोः प्रिये । अत एव नारायणसदृशत्वा-
प्रतिप्रियोऽप्यच्युत , अलिकुलैः सह त्वां बिभ्रत् त्वया दृ-
ष्टः । त्वत्सुगन्धमीसा मधुव्रता अपि तेन न निवार्यन्ते,
तादृशसुगन्धराहतेन त्यक्ताः किं कुर्म । तस्मादस्मज्जीवना
थयेति भावः । अहो विष्णुपूजागर्विता जारासक्तमानसा
णीरस्मान् न ब्रूत इति मत्वाऽन्यत्र याताः ॥ मानिनीपक्षे
मे, हेकल्याणि, परमकल्याणवति, यतो, गोविन्दचरणप्रिये
ादरव्यञ्जकम् । गुरुचरणेरुक्तमितिवत् । हे गोविन्दस्य प्रि-
ं. । यतोऽलिकुले सह त्वां जाता पिभ्रत् । अहो त्वदीय भा-
यतोऽतिका ता प्रिया अस्मादृश्यो येन स त्वां सर्वदा बि-
े । अत एव त्वत्तोऽप्यच्युतस्तस्माद् दृष्टश्चेदवश्य कथयेति
। अहो, इयं ततो लब्धादरा जाताऽखर्वगर्वा न कथयेदि
ाऽन्यत्र प्रास्थता ॥
नेहवित्पक्षे, अथ ज्ञानेन्द्रियपञ्चकमध्ये मुख्यत्वाच्चक्षुरिन्द्रिय
त । हे तुलसि, तत्स्थानाये चक्षुरिन्द्रिय, कल्याणि कल्या-
साधनभूते, गोविन्दस्यैन्द्रियकसुखमोक्षश्चरण तत्ताद्रूपय प्रति
ग यैरिन्द्रियैस्तेषु मध्य प्रिये अलिकुलस्तत्सदृशचित्तरूपत्वर न-
द्राथै सह त्वां बिभ्रत् प्रियो, यतो वरतु । स्वरूपा३ क

न मच्युत, स ते त्वया दृष्ट' कच्चित् ॥ ७ ॥
एना, साधारण्य, स्त्रिय एवास्माकमुपकार करिष्यन्ती
मालत्यादिका पृच्छति ॥

त्यदर्शि व कच्चिन्मल्लिके जाति यूथिके ॥
वो जनयन् यात, करस्पर्शेन माधव ॥ ८ ॥

ततीति ॥ हे मालति, हे मल्लिके, हे जाति, हे यूथिके
लतति वेष्टयतीति मालती । मल्लते सुगन्धादिक धार
ल्लिका । जायत इति जाती, सुखजनकत्वात् सफलज
यूथमस्त्यस्या असौ यूथिका । एवम्भूता अ वर्थसञ्ज्ञाः
त्रो लता अतिसुग धपुष्पा भगवत्प्रिया, अतो भवतीर्वि
वो युष्माभि कच्चिद् दृष्ट । न दृष्ट इति न वक्तव्य
यो युष्माक हस्तकमलस्पर्शेन प्रीतिमुत्पादयन् यात'
न यस्यात्यन्तविकासस्य दर्शनात् । ननु तस्यास्मत्स्पर्शे
जनमिति चेत् तत्राहु ॥ माधव ॥ लक्ष्मीपतेः सर्वदा त
तदलङ्काराथ पुष्पावचय आवश्यक इति भावः । अहे
पा' फलरहिता लक्ष्मीशमानि यो न कथयिष्यन्तीति म
गता । मालतीजात्योरवान्तरभेदा यूथिका, जुही
॥ अनभिज्ञापक्षे, अहो सौभाग्यातिरेकवत्यो नम्रस्वभावा
रा विकसितवदना परोपकारिण्यो भविष्यन्तीति मत्व
देका, पृच्छति ॥ मालतीति ॥ हे मालत्यादयः, कच्चि
, भवतीना न केवल दर्शनमात्रमपि तु स्पर्शोऽपि जात इ
त इत्याहु ॥ प्रीतिमिति ॥ यतो माधव परमशोभाधीशत्वा
शोभाजनक' । स्पर्शश्च पुष्पप्रियत्वात्तस्यावश्यमेव जात
माधवो वसन्त इवेति श्लेषेण तद्वियोगो भवतीनामप्यस

त्यदुःखत्वादवश्य वदतेति भाव । अहो एता कर
ावारण कृत्वा गत स्यादतस्तद्भयान्न कथयतीति म
ा याता ॥ मानिनीपक्षे, अहो इमा मालत्यादय सौभा
गैरसमृतमाना अत एता मष्टव्या इत्याशयेन पृच्छन्ति ॥
ा ॥ यतो भवत्यः पुष्पिण्योऽत करस्पर्शनव. प्रीतिं जन
ा इति सनर्मेर्ष्या व्यञ्जयन्ति । पर त्वेतावता भवती
त विधयो, यत स न कस्या अपि पति , किं तु माया
त्रस्य धव. स्वामी । तस्मादस्मत्पक्षपाति यो युष्मत्स्वय क-
भाव. । अहो सद्य'स्पर्शोत्थाऽखर्वगर्वत्वत्य एता न ब्रुव
मत्वाऽ यत्र मस्थिता. ॥

वृत्तिपक्षे, मालत्यादिस्थानीयानि यानि श्रोत्रत्वगादिमन
यानीन्द्रियाणि पृच्छन्ति ॥ मालतीति ॥ व प्रीति विषयो
सुख तत्प्रकाशेन जनयन् यात । मतीत्या विषय व्याप्य
। ननु व्यापकस्य तस्य कथ गमनमितिचेद् तत्राहु ॥
॥ माया ममावृत्तेर्धवः स्वामी । तथाच ममाणचैतन्यस्य
ेकमिति भाव ॥ ८ ॥

ाहो एते आम्रादय परोपकारशीलास्तपस्विनस्तीर्थसेवा-
ा मत्वा तान् पृच्छन्ति ॥

चूतप्रियालपनसासनकोविदार-
जम्ब्वर्कबिल्वबकुलाम्रकदम्बनीपा ॥
येऽन्ये परार्थभवका यमुनोपकूला
शसन्तु कृष्णपदवी रहितात्मना न ॥ ९ ॥

चूतेति ॥ चूताम्रयोर्मधुराऽम्लफलत्वेन भेद. । नीपो धूलि

कदम्बो बृहत्पुष्पः । कदम्ब क्षुद्रपुष्पो तिसुग धः । प्रियाल शालभेद । पनस, कटहर इति ख्यातो बृहत्फल, । असन' पीतशालः । कोविदार, काचनारभेद । अर्क क्षुद्रवृक्षोऽपि गोपेश्वर प्रियत्वात् प्रश्नार्ह । च्योतति रसमिति चूत । च्युतिर् क्षरणे प्रीणातीति प्रियाल । प्रीञ् तर्पणे । पनाय्यते स्तूयत इति पनस अस्यति परदु खमिति असन । असु क्षेपणे । कु भूमिं विदारयतीति कोविदार' । दृ विदारणे । परोपकारार्थं झटिति भूमिं निर्भिद्य नि सृत' । जमति परदु'खमिति जम्बूः । जमु अदने अर्कः भानुवज्जाड्यहर, । बिलति परदु,खमिति बिल्व' । बिल भेदने । वङ्कते अवगच्छति परदुःखमिति वकुलः । वकि गत्यर्थे अम्यते स्वदु खनिरासार्थं जनैरित्याम्र' । अम गत्यादौ । कपति हिनस्ति परदुःखमिति कदम्ब । नयति सुख प्रापयतीति नीपः । णीञ् प्रापणे । एवम्भूता हे चूतादय । अ ये च ये मधूकादय, परार्थभवकाः परार्थमेव भवो जन्म येषा ते । भविका इति पाठे भविक मङ्गलम् । फलाद्युत्कर्षोऽपीत्यर्थ' । तत्रापि, यमुनोपकूला, ॥ यमुनाया' कूलसमीपे वर्तमानाः । तीर्थनिकटवर्तित्वात सत्यवादिन' । नोऽस्मभ्य कृष्णस्य सदान दरूपस्य भगवत' पदवी मार्ग शसन्तु कथय तु स्वस्य करुणापात्रतामाविष्कुर्वी त । रहितात्मनाम ॥ काश्चिद्गृहादिरहिता । अनस्तच्छसनम् । तत्रापि मृषा भाषण न विधेयम् । यतो, यमुनोपकूलाः । यमुनासन्निधौ वर्तमाना इति शपथो व्यज्यते । शमनेनात्मप्रदान कुरुतेति भावः । अत्र दशन सिद्धवत्कृत्य मार्ग पृच्छन्ति । अहो एते समाधिनिष्ठा न शृण्वन्त्यतो न किञ्चिदपि वदन्तीति निवृत्ताः ॥ अनभिज्ञापक्षे, कृष्णस्यास्माच्चत्तरत्नमञ्जूषामाकृष्य गतस्य चोरचक्रवर्तिनः पदवी शसन्तु । व्यञ्जयन्तु । ननु स्वयमेवान्विष्य तस्य

श्वेतव्य इत्याशङ्क्याहु ॥ रहितात्मनाम् ॥ विरहव्याकुल
षणसमर्थसमाहितमनोरहितानाम् । कृपया भवन्त एव व
अहो एत तीर्थवासिनोऽतोऽत्य तरुठोरहृदयाः, अतो न
। तीति ततो निरुत्ता. ॥ मानिनीपक्षेऽप्येवम् ॥

द्वत्तिपक्षे चूतादिस्थानीयानि पञ्चकर्मेन्द्रियाणि, जम्ब्वादि
न् पञ्चप्राणान्, कदम्बनीपौ चित्ताऽहङ्कारौ पृच्छति ॥
ये चाऽ ये विषया परार्थमरका आत्मशेषभूता यमुनास्था
ामदशास्थिता. । नोऽस्माभि श्रुतिभी राहतात्मनामस्मद्
वधुरचित्तानाम् । कृष्णस्य परमात्मन पदवी मार्ग शास्तु
ाकस्य प्राप्त्युपाय सूचय तु । तथाच तदनुमापका भ
। तु तदवभासका इति भावः ॥ ९ ॥
ामतिविह्वलमानसा' प्राप्तात्य तदे या मार्गकथनप्रार्थनयोग्य
ाणाद् भूमीनिहितदृष्टयस्तस्या. सर्वत्र सत्त्वनावश्य तद्दर्शन
ाहु ।

किं ते कृत क्षिति तपो बत केशवाङ्घ्रि-
स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि ॥
अप्यङ्घ्रिसम्भव उरुक्रमविक्रमाद्वा
आहो वराहवपुष परिरम्भणन ॥ १० ॥

कमिति ॥ हे क्षिति, ते त्वया किं कीदृशनामधेय तपः कृ
न्यप्यस्माभिरपि तप कृतमेव, तथापि तादृशफलानुकूल
ऽतो महान् खेद इत्याशयेनाहु' ॥ बतेति ॥ यतो या त्व
पाङ्घ्रिस्पर्शेनोत्सवो यस्या. सा । कश्च अश्च ईशश्च केशाः
ाणुशिवास्तेऽस्य वश्यतया स तीति केशव । केशान्विया

मक्तया याति गच्छतीति वा । तथाच तादृशस्य परमात्मनोऽङ्घ्रि स्पर्शोत्सवो, नाल्पस्य तपस. फलमिति भाव. । एतज्ज्ञापक चिह्न माहु ॥ अङ्गरुहैरुत्पुलकिता विभासि विशेषेण शोभसे । तत्र वि- शेष पृच्छन्ति ॥ अपि सम्भावनायाम् । किमयमुत्सवोऽङ्घ्रिस म्भव. । सम्प्रति तवैकदेशो चरणस्पर्शसम्भूत. । यद्वा नैतावत्, कि तु पूर्वमेवोरुक्रमस्य त्रिविक्रमस्य वामनस्य पदा सर्वाक्रमणाद धुना भगवच्चरणस्पर्शेनासम तात् । अथवा, नैतावदेवाऽपि तु त तोऽपि पूर्व वराहस्य वपुषा परिरम्भणेनालिङ्गनेनेदानीमङ्घ्रिस्प र्शात् समुन्नत । तथाचास्मत्साजात्य भवत्या अप्यतस्त पश्य ती त्व दर्शयति भाव ॥ अनभिज्ञापक्षे, अहो किमथ तीर्थवासिनाऽमी नि न्द्य ते, यस्तमवश्य जानाति स प्रष्टव्य इत्युक्तवतीना मध्ये काचि त् क्षितिं सूचयामास, तत सर्वास्तामाहु ॥ किमिति ॥ हे क्षिति, त्वया कि तप कृतम् । पुलकितैरङ्गरुहैरङ्कुरैः केशवस्याभिरूपा. केशा यस्य तस्य परमसु दरस्य कृष्णस्यास्पाङ्घ्रिस्पर्शोत्सवा वि भासि । तात्शोत्सवजनके तपसि पृष्टे, अदत्तोत्तरा तामुपलक्ष्य स्वय मेवोत्प्रेक्ष त्योऽपि अयमङ्घ्रिसम्भव उत्सव उरुक्रमविक्रमजनित पीडारूपतपसो वा, आहोस्वि महावराहवपुष. परिरम्भणजनितव्य थारूपण तपसा । यद्वा, तच्चरणस्पर्शजनितपुण्याद्वा । कि वा तत्परि रम्भणजनितपुण्येन । तथाच तत्पादस्पर्शादिरहितत्वाद् दुर्भगानाम स्माक, तत्पादस्पर्शमनुभव ती सुभगा त्व करुणया त प्रदर्शयेति भाव ॥ मानिनीपक्षेऽप्येवम् ॥

निवृत्तिपक्षे, अथ क्षितिस्थानीय मन पृच्छन्ति ॥ किमि ति ॥ हे क्षिते, त्वया कि तप.=आलोचन कृतम् । विचारस्वरूप माविष्कुर्वीति । केशान् ब्रह्मविष्णुरुद्रान् वष्टि इच्छति सृष्ट्याद्य ऽर्थमिति केशवः परमात्मा । तस्याङ्घ्रिरश इवांशो जीवात्मा । ममै

